रक्षःक्षुद्रग्रहादिप्रतिहतिशमनी वाहितश्वेतभास्वत्-
सन्नालीका सदा प्तापरिकरमुदिता सा क्षमालाभवन्तम् ।
शुभ्रा, श्रीशान्तिदेवी जगति जनयतात् कुण्डिका भाति यस्याः,
सन्नालीका सदाप्ता परिकरमुदिता साक्षमाला भवन्तम् ॥ ४ ॥

## विमलजिनस्तुतिः

(पृथ्वीवृत्तम्)

अपापदमलं घनं शमितमानमामो हितं,
नतामरसभासुरं विमलमालयाऽऽमोदितम् ।
अपापदमलङ्घनं शमितमानमामोहितं,
न तामरसभासुरं विमलमालयामोदितम् ॥ १ ॥

सदानवसुराजिता असमरा जिना भीरदाः,
क्रियासु रुचितासु ते सकलभारतीरा यतः ।
सदानवसुराजिता असमराजिनाभीरदाः,
क्रियासुरुचितासु ते सकलभा रतीरायताः ॥ २ ॥

सदा यतिगुरोरहो ! नमत मानवैरञ्चितं,
मतं वरदमेनसा रहितमायताभावतः ।
सदायति गुरोरहो ! न मतमानवैरं चितं,
मतं वरदमेन सारहितमायता भावतः ॥ ३ ॥

प्रभाजि तनूतामलं परमचापला रोहिणी,
सुधावसुरभीमना मयि सभाक्षमालेहितम् ।
प्रभाजितनुताऽमलं परमचापलाऽऽरोहिणी,
सुधावसुरभीमनामयिसभा क्षमाले हितम् ॥ ४ ॥

## अनन्तजिनस्तुतिः

(द्रुतविलम्बितवृत्तम्)

सकलधौतसहासनमेरव-स्तव दिशन्त्वभिषेकजलप्लवाः ।
मतमनन्तजितः स्नपितोल्लसत्—सकलधौतसहासनमेरवः ॥ १ ॥
मम रतामरसेवित ! ते क्षण—प्रद ! निहन्तु जिनेन्द्रकदम्बक ! ।
वरद ! पादयुगं गतमज्ञता, ममरतामरसे विततेक्षण ! ॥ २ ॥
परमतापदमानसजन्मनः, प्रियपदं भवतो भवतोऽवतात् ।
जिनपतेर्मतमस्तजगत्त्रयी—परमतापदमानसजन्मनः ॥ ३ ॥
रसितमुच्चतुरं गमनाय कं, दिशतु काञ्चनकान्तिरिताऽच्युता ।
धृतधनुःफलकासिशरा करै—रसितमुच्चतुरङ्गमनायकम् ॥ ४ ॥

## धर्मजिनस्तुतिः

(अनुष्टुप्वृत्तम्)

नमः श्रीधर्म ! निष्कर्मो—दयाय महितायते ! ।
मर्त्यामरेन्द्रनागेन्द्रै—र्दयायमहिताय ते ॥ १ ॥
जीयाज्जिनौघो ध्वान्तान्तं, ततान लसमानया ।
भामण्डलत्विषा यः स, ततानलसमानया ॥ २ ॥
भारति ! द्राग् जिनेन्द्राणां, नवनीरक्षतारिके ।
संसाराम्भोनिधावस्मा—नवनौ रक्ष तारिके ! ॥ ३ ॥
केकिस्था वः क्रियाच्छक्ति—करा लाभानयाचिता ।
प्रज्ञप्तिर्नूतनाम्भोज—करालाभा नयाचिता ॥ ४ ॥

## शान्तिजिनस्तुतिः

(शार्दूलविक्रीडितवृत्तम्)

राजन्त्या नवपद्मरागरुचिरैः पादैर्जिताष्टापदा—
द्रेऽकोप ! द्रुतजातरूपविभया तन्वाऽऽर्य ! धीर ! क्षमाम् ।
बिभ्रत्याऽमरसेव्यया जिनपते ! श्रीशान्तिनाथास्मरो-
द्रेकोपद्रुत ! जातरूप ! विभयातन्वार्यधी ! रक्ष माम् ॥ १ ॥

ते जीयासुरविद्विषो जिनवृषा मालां दधाना रजो-
राज्या मेदुरपारिजातसुमनःसन्तानकान्तां चिताः ।
कीर्त्या कुन्दसमत्विषेषदपि ये न प्राप्तलोकत्रयी-
राज्या मेदुरपारिजातसुमनःसन्तानकान्ताञ्चिताः ॥ २ ॥

जैनेन्द्रं मतमातनोतु सततं सम्यग्दृशां सद्गुणा—
लीलाभं गमहारि भिन्नमदनं तापापहृद् यामरम् ।
दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि पर्युल्लस—
ल्लीलाभङ्गमहारिभिन्नमदनन्तापापहृद्यामरम् ॥ ३ ॥

दण्डच्छत्रकमण्डलूनि कलयन् स ब्रह्मशान्तिः क्रियात्,
सन्त्यज्यानि शमी क्षणेन शमिनो मुक्ताक्षमाली हितम् ।
तप्ताष्टापदपिण्डपिङ्गलरुचिर्योऽधारयन् मूढतां,
संत्यज्यानिशमोक्षणेन शमिनो मुक्ताक्षमालीहितम् ॥ ४ ॥

## कुन्थुजिनस्तुतिः

(मालिनीवृत्तम्)

भवतु मम नमः श्रीकुन्थुनाथाय तस्मा—
यमितशमितमोहायामितापाय हृद्यः ।
सकलभरतभर्ताऽभूज्जिनोऽप्यक्षपाशा—
यमितशमितमोहायामितापायहृद् यः ॥ १ ॥

सकलजिनपतिभ्यः पावनेभ्यो नमः सन्—
नयनरवरदेभ्यः सारवादस्तुदेभ्यः ।
समधिगततनुतिभ्यो देववृन्दाद् गरीयो—
नयनरवरदेभ्यः सारवादस्तु तेभ्यः ॥ २ ॥

स्मरत विगतमुद्रं जैनचन्द्रं चकासत्—
कविपदगमभङ्गं हेतुदन्तं कृतान्तम् ।
द्विरदमिव समुद्यद्दानमार्गं धुताघं—
कविपदगमभङ्गं हेतुदन्तं कृतान्तम् ॥ ३ ॥

प्रचलदचिररोचिश्चारुगात्रे ! समुद्यत्—
सदसिफलकरामेऽभीमहासेऽरिभीते ! ।
सपदि पुरुषदत्ते ! ते भवन्तु प्रसादाः,
सदसि फलकरा मेऽभीमहासेरिभीते ॥ ४ ॥

## अरजिनस्तुतिः

(द्विपदीवृत्तम्)

व्यमुञ्चच्चक्रवर्तिलक्ष्मीमिह तृणमिव यः क्षणेन तं,
सन्नमदमरमानसंसारमनेकपराजितामरम् ।
द्रुतकलधौतकान्तमानमतानन्दितभूरिभक्तिभाक्—
सन्नमदमरमानसं सारमनेकपराजितामरम् ॥१॥

स्तौति समन्ततः स्म समवसरणभूमौ यं सुरावलिः,
सकलकलाकलापकलिताऽपमदाऽरुणकरमपापदम् ।
तं जिनराजविसरमुज्जासितजन्मजरं नमाम्यहं,
सकलकलाकलाऽपकलितापमदारुणकरमपापदम् ॥२॥

भीममहाभवाब्धिभवभीतिविभेदि परास्तविस्फुरत्—
परमतमोहमानमतनूनमलं घनमघवतेऽहितम् ।
जिनपतिमतमपारमर्त्यामरनिर्वृतिशर्मकारणं,
परमतमोहमानमत नूनमलङ्घनमघवतेहितम् ॥३॥
याऽत्र विचित्रवर्णविनतात्मजपृष्ठमधिष्ठिता हुतात्—
समतनुभागविकृतधीरसमदवैरिव धामहारिभिः ।
तडिदिव भाति सान्ध्यघनमूर्धनि चक्रधराऽस्तु सा मुदे—
ऽसमतनुभा गवि कृतधीरसमदवैरिवधा महारिभिः ॥४॥

## मल्लिजिनस्तुतिः

(रुचिरावृत्तम्)

नुदस्तनुं प्रवितर मल्लिनाथ ! मे,
प्रियङ्गुरोचिररुचिरोचितां वरम् ।
विडम्बयन् वररुचिमण्डलोज्ज्वलः,
प्रियं गुरोऽचिररुचिरोचिताम्बरम् ॥१॥
जवाद् गतं जगदवतो वपुर्व्यथा—
कदम्बकैरवशतपत्रसं पदम् ।
निजोत्तमान् स्तुत दधतः स्रज स्फुरत्—
कदम्बकैरवशतपत्रसम्पदम् ॥२॥
स सम्पद दिशतु जिनोत्तमागमः,
शमावहन्नतनुतमोहरोऽदिते !
स चित्तभूः क्षत इह येन यस्तपः—
शमावहन्नतनुत मोहरोदिते ॥३॥
द्विपं गतो हृदि रमतां दमश्रिया,
प्रभाति मे चकितहरिद्विपं नगे ।
बटाह्वये कृतवसतिश्च यक्षराट्,
प्रभातिमेचकितहरिद् विपन्नगे ॥४॥

## मुनिसुव्रतजिनस्तुतिः

(नर्कुटकवृत्तम्)

जिनमुनिसुव्रतः समवताज्जनतावनतः
स मुदितमानवा धनमलोभवतो भवतः ।
अवनिविकीर्णमादिपत यस्य निरस्तमनः—
समुदितमानबाधनमलो भवतो भवतः ॥१॥

प्रणमत तं जिनव्रजमपारविसारिरजो—
दलकमलानना महिमधाम भयासमरुक् ।
यमतितरां सुरेन्द्रवरयोषिदिलामिलनो—
दलकमला ननाम हिमधामभया समरुक् ॥२॥

त्वमवनताञ्जिनोत्तमकृतान्त ! भवाद् विदुषो—
ऽव सदनुमानसङ्गमन ! याततमोदयितः ।
शिवमुखसाधकं स्वभिदधत् सुधियां चरणं
वसदनुमानस गमनयातत ! मोदयितः ! ॥३॥

अधिगतगोधिका कनकरुक् तव गौर्यु चिता—
ङ्कमलकराजि तामरसभास्यतुलोपकृतम् ।
मृगमदपत्रभङ्गतिलकैर्वदनं दधती,
कमलकरा जितामरसभाऽस्यतु लोपकृतम् ॥४॥

## नमिजिनस्तुतिः

(शिखरिणीवृत्तम्)

स्फुरद्विद्युत्कान्ते ! प्रविकिर वितन्वन्ति सततं,
ममायासं चारो ! दितमद ! नमेऽघानि लपितः ! ।
नमद्भव्यश्रेणिभवभयभिदां हृद्यवचसा—
ममायासञ्चारोदितमदनमेघानिल ! पितः ! ॥१॥

नखांशुश्रेणीभिः कपिशितनमन्नाकिमुकुटः,
सदा नोदी नानामयमलमदारेरिततमः
प्रचक्रे विश्वं यः स जयति जिनाधीशनिवहः,
सदानो दीनानामयमलमदारेरिततमः । ॥२॥
जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधो,
गुरुर्वांहोऽपातापदघनगरीयानसुमतः ।
कृतान्तस्त्रासीष्ट स्फुटविकटहेतुप्रमितिभा—
गुरुर्वाऽहो ! पाता पदघनगरीयानमुमतः । ॥३॥
विपक्षव्यूहं वो दलयतु गदाक्षावलिधरा—
ऽसमा नालीकालोविशदचलना नालिकवरम् ।
समध्यासीनाऽम्भोभृतघननिभाऽम्भोधितनया-
समानाली काली विशदचलनानालिकवरम् ॥४॥

## नेमिजिनस्तुतिः

(शार्दूलविक्रीडितवृत्तम्)

चिक्षेपोर्जितराजकं रणमुखे योऽलक्षसख्यं क्षणा-
दक्षामं जन ! भासमानमहस राजीमतीतापदम् ।
तं नेमिं नम नम्रनिर्वृतिकरं चक्रे यदूनां च यो,
दक्षामञ्जनभासमानमहसं राजीमतीतापदम् ॥१॥
प्राव्राजीज्जितराजका रजं इव ज्यायोऽपि राज्यं जवाद्,
या संसारमहोदधावपि हिता शास्त्री विहायोदितम् ।
यस्याः सर्वत एव सा हरतु नो राजी जिनानां भवा-
यासं सारमहो दधाव पिहिताशास्त्रीविहायोऽदितम्॥२॥
कुर्वाणाऽणुपदार्थदर्शनवशाद् भास्वत्प्रभायास्त्रपा-
मानत्या जनकृत्तमोहरत ! मे शस्ताऽदरिद्रोहिका ।

अक्षोभ्या तव भारती जिनपते ! प्रोन्मादिनां वादिनां,
मानत्याजनकृत् तमोहरतमेश ! स्तादरिद्रोहिका ॥३॥
हस्तालम्बितचूतलुम्बिलतिका यस्या जनोऽभ्यागमद्,
विश्वासेवितताम्रपादपरतां वाचा रिपुत्रासकृत् ।
सा भूतिं वितनोतु नोऽर्जुनरुचिः सिंहेऽधिरूढोल्लसद्-
विश्वासे वितताम्रपादपरताऽम्बा चारिपुत्राऽसकृत् ॥४॥

## पार्श्वजिनस्तुतिः

(स्रग्धरावृत्तम्)

मालामालानबाहुर्दधददधदरं यामुदारां मुदाऽऽरा-
ल्लीनाऽलीनामिहाली मधुरमधुरसां सूचितोमाचितो मा ।
पातात् पातात् स पार्श्वो रुचिररुचिरदो देवराजीवराजी-
पत्राऽऽपत्त्रा यदीया तनुरतनुरवो नन्दको नोदको नो ॥१॥
राजी राजीववक्त्रा तरलतरलसत्केतुरङ्गत्तुरङ्ग-
व्यालव्यालग्नयोधाचितरचितरणे भीतिहृद् याऽतिहृद्या ।
सारा साऽऽराज्जिनानामलममलमतेर्बोधिका माऽधिकामा-
दव्यादव्याधिकालाननजननजरात्रासमानाऽसमाना ॥२॥
सद्योऽसद्योगभिद् वागमलगमलया जैनराजीनराजी-
नूता नूतार्थधात्रीह ततहततमःपातकाऽपातकामा ।
शास्त्री शास्त्री नराणां हृदयहृदयशोरोधिकाऽबाधिका वा—
ऽऽदेया देयान्मुदं ते मनुजमनु जरां त्याजयन्ती जयन्ती ॥३॥
याता या तारतेजाः सदसि सदसिभृत् कालकान्तालकान्ता—
ऽपारिं पारिन्द्रराजं सुरवसुरवधूपूजिताऽरं जितारम् ।
सा त्रासात् त्रायतां त्वामविषमविषभृद्भूषणाऽभीषणा भी-
हीनाऽहीनाग्र्यपत्नी कुवलयवलयश्यामदेहाऽमदेहा ॥४॥

## महावीरजिनस्तुतिः

(अर्णवदण्डकवृत्तम्)

नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमाला-
रजोरञ्जितांह्रे ! धरित्रीकृता-
वन ! वरतमसंगमोदारतारोदितानंगनार्यावलीलापदेहे-
क्षितामोहिताक्षो भवन् ।
मम वितरतु वीर ! निर्वाणशर्माणि जातावतारो-
धराधीशसिद्धार्थधाम्नि क्षमालङ्कृता-
वनवरतमसंगमोदारतारोदितानंगनार्याव ! लीलापदे
हे क्षितामो हिताक्षोभवान् ॥ १ ॥

समवसरणमत्र यस्याः स्फुरत्केतुचक्रानकानेकपद्मे-
न्दुरुक्चामरोत्सर्पिसालत्रयी-
सदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुर्वरा-
राट् परेताहितारोचितम् ।
प्रवितरतु समीहितं साऽर्हतां संहतिर्भक्तिभाजां भवाम्भोधि-
सम्भ्रान्तभव्यावलीसेविता-
ऽसदवनमदशोकपृथ्वीक्षणप्रा यशोभातपुत्रप्रभागुर्वराराट्-
परेताहितारोचितम् ॥ २ ॥

परमततिमिरोग्रभानुप्रभा भूरिभंगैर्गभीरा भृशं विश्ववर्ये
निकाय्ये वितीर्यात्तरा-
महतिमतिमते हि ते शस्यमानस्य वासं सदाऽतन्वतीता-
पदानन्दधानस्य साऽमानिनः।
जननमृतितरंगनिष्पारसंसारनीराकरान्तर्निमज्जज्जनो-
त्तारनौर्भारती तीर्थंकृत् !,
महति मतिमते हितेशय मानस्य वा ससदातन्वती ताप-
दानं दधानस्य सामानि नः ॥ ३ ॥

सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फु-
रद्रश्मिसारक्रमाम्भोरुहे !,
परमवसुतरांगजाऽऽरावसन्नाशितारातिभाराऽजिते !
भासिनी हारतारा बलक्षेमदा।
क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्धटे सस्थिते !
भव्यलोकं त्वमम्बाऽम्बिके !,
परमव सुतरां गजारावसन्ना शितारातिभा राजिते
भासि नीहारतारावलक्षेऽमदा ॥ ४ ॥



पू. पं. श्रीहेमविजयजीगणिप्रणीता विजयनामिका–यमकबद्ध–

# स्तुतिचतुर्विंशतिका

## आदिजिनस्तुतिः

(मालिनीवृत्तम्)

दिश सुखमखिलं नः, सीरसाधारणस्त्वं,
वृषभ ! रतरसायामीश ! म्लान दधानः ।
सुरनरनिकरेण, स्तूयसे यः सदोद्यद्,
वृषभर तरसा ग्रामी शमानन्दधानः ॥ १ ॥

सुजनजिनवराणां, स्तोममस्तस्मराणां,
व्रज मघवलयानां, तत्रपात्रं पराणाम् ।
पवन इव पयोद, योऽनयन्नाशमाशु,
व्रजमघवलयानां, तन्त्रपात्रं पराणाम् ॥ २ ॥

उचितमिह भवन्तं, सर्ववित्सार्वभौमाऽऽ–
गम ! तनु[1] महतां[2] मे, ध्यानमस्ताऽऽ[3]रभावम् ।
निखिलसुखनिदान, कामितार्थैकदेवाऽ–
गमतनु[4] महतां मेध्याऽनमस्तारभावम् ॥ ३ ॥

त्रिदशततिनता श्रीधाम चक्रेश्वरी सा,
जयति मुदितहृत् याताऽपमानाऽसमाना ।
प्रणमति नरराजिर्यां स्तुतध्वस्तदम्भाऽ–
जयति[5]मुदितहृद्याऽतापमाना समा[6]ना ॥ ४ ॥

---

१. कुरु । २ पूजयताम् । ३ आर-शत्रूणां समुदायसत्ता । ४. दीर्घं ध्यानम् । ५. कामः । ६ सपूजा ।

## अजितजिनस्तुतिः

(मालिनीवृत्तम्)

मनसि मनसिजेश, धेहि तीर्थाधिप सत्-
तम ! जितमदमोहेऽसाध्वसं गेयशोभम् ।
अगतमनसमेणीदृग्गणे साम्यशर्म-
तमजितमदमोहे, साध्वसगे यशोभम् ॥ १ ॥
मनसि जिनवराणां, स्तोममस्ताभिमान-
स्मरतरसमदम्भ, देहिनां भो ! गतारम् ।
सुकृतवनविताने, वारिवाह समूहाः,
स्मरत रसमदं भद्रेहिना[1] भोगतारम् ॥ २ ॥
निहितनिखिलशस्त, ध्वस्तसद्रोहमोहा-
जि नमत महतारं, भेदि नानाऽऽमयानाम् ।
अनृतदृशि जनौघे, तस्थुषां हन्तृ-नित्यं,
जिनमतमहृता[2]ऽऽरम्भे दिनानामयानाम् ॥ ३ ॥
वितनु सुतनुसम्पत् !, रश्मिरूपाभिभूता-
शनिरतिरजिते ! श, मे दुरापं कलाभा ।
नयनिगमनियोगैः सेवमाना महर्षी-
शनिरतिरजितेशं, मेदुरा पङ्कलाभा ॥ ४ ॥

---

## शम्भवजिनस्तुतिः

(मालिनीवृत्तम्)

पथि मथितदुरन्त-द्रोहमोहप्रसून-
ध्वज ! नय सहितेन !, पुण्यकान्ते सदैव ।

---

१. कल्याणकामिनाम् । २. अपहृतः-अहृतः आरम्भो येन तस्मिन्-।

जिन ! जनितशिवश्री-संगरङ्ग ! तुरङ्ग—
ध्वज ! नयसहिते नः, पुण्यकान्ते ! सदैव ॥१॥

निवह ! जिनवराणां, श्रेयसा पीवराणां,
शुभवति रुचिरे नः, काममुद् रामतारे ।
भवतु भुवनवाहे, चातकानामिवेहाऽऽ—
शु भवति रुचिरेनः-काममुद्राऽमताऽऽरे ॥२॥

वसतु तव रहस्य, शर्म मेऽर्हद्गिरां सत्—
कल यतिरति पाले, हृद्यमानं ददानम् ।
पशुपरिवृढभाव, यन्महार्घं सनाथं,
कलयति रतिपाऽऽले, हृद्यमानन्ददानम् ॥३॥

स्वदृशमसदृश श्रीसाधुसङ्घेऽनघे चिद्—
वसुहृदि दुरितारे !, धीरमाता ! नवेहे ।
प्रकटितपटुकोपाऽऽटोपरूपस्वरूपाऽ—
व सुहृदि दुरितारे ! धीरमाऽतानवेहे ॥४॥

## अभिनन्दनजिनस्तुतिः

(मालिनीवृत्तम्)

जनयतु कपिकेतो ! देव ! साऽन्तं वरीयः—
शम ! नतव सुधा भो ! ज्यानिकामाऽनयानाम् ।
जगति दुरधिगम्यां, मूर्तिमर्च्चन्त्यमाया—
शमन ! तव सुधाभोज्या निकामाऽनयानाम् ॥१॥

विजितकुमतगर्वं, सर्वविद्वृन्द ! चञ्चत्—
करमहमतिवित्तं, ज्ञाऽऽनताऽरागधीरम् ।

हृदि मुदितमनस्कं, त्वां वहे शालिलीलाऽऽ—
करमह ! मतिवित्तं, ज्ञानताराऽगधीरम् ॥२॥
पिबत विबुधधुर्या !, कर्णपर्णैर्जिनानां,
समयममृतकल्पं, वित्तमानाऽञ्चितानाम् ।
विलसदतिशयश्रीभोगयोगैः सदैवाऽ—
समयममृतकल्पं, वित्तमानां चितानाम् ॥३॥
नलिनमलिनिवासं, साधुसार्थं स्तुवन्तीं,
नम दमरसमेतां, कालिकां तामुदारम् ।
हरिहरिणदृशो यां, भाग्यभाजं भजन्ते,
नमदमरसमेतां, काऽऽलिकान्ता मुदाऽरम् ॥४॥

## सुमतिजिनस्तुतिः

(मालिनीवृत्तम्)

मनुज ! जिनमजन्याऽ–जेयमाऽऽत्मीयचित्तेऽ—
व सुमतिमतमाऽऽनन्दानवाऽऽसङ्गतारम् ।
नमदमरनरेशश्रेणिसंसेविताङ्घ्रि,
वसुमतिमतमानं, दानवासं गताऽऽरम् ॥१॥
निजहि चयमघाना–महतां व्रात सम्पत्—
प्रद ! रजनिनिभानां, विश्वपद्मांशुकानाम् ।
वचनमहृत येषां, हारिणामाम्रपुष्प—
प्रदरजनिनिभानां, विश्वपद्मां शुकानाम् ॥२॥
जिनवचन ! भवाब्धौ, मज्जतामङ्गभाजां,
भव जनितरसाऽऽयं, तत्त्वमाऽऽलम्बनाय ।

दिशसि गृहमपास्य, प्रस्थितानामचेतो—
भवजनि तरसाऽय, तत्त्वमालं वनाय ॥३॥
कुरु रिपुमलकौघैः, सा महाकालि नुन्नां—
जनरुचिरमहीनाऽ-भङ्गतापं नवेहे ! ।
युवतिततिषु रूपं, ते यशः प्राप गौस्त्री—
जनरुचिरमहीनाऽऽ-भं गतापऽऽद् नवेहे! ॥४॥

## पद्मप्रभजिनस्तुतिः
(मालिनीवृत्तम्)

प्रहरतु हरिपीठं, ते स्थितं वर्ष्म पद्म—
प्रभ ! मम तरसाऽलङ्कृत्य वित्तात ! मोहम् ।
यदभजत विभूतिः, शालिबालप्रवाल—
प्रभममतरसाऽलं, कृत्यवित्ता तमोहम् ॥१॥
सृजतु जिनवराऽऽवः, पादयुग्मं नतज्ञाऽऽ—
वलि कमलमतं द्राव दिताऽऽमं त्रपात्रैः ।
कुलिशमिव गिरीणां, द्रागरीणामृषीशैं—
बलिकमलमतन्द्रा !, वन्दिता ! मन्त्रपात्रैः ॥२॥
जनय जिनवराणां, स्व मनो ध्वंसिताऽऽगो—
गिरि सुरमहितायां, सज्जनाऽनापदायाम् ।
युगपदखिललोकाऽ-स्तोकहर्षप्रदायां,
गिरि सुरमहितायां, सज्जनानापदायाम् ॥३॥
वरमचरतरश्री ! रच्युते ! नः प्रनष्टां,
धनुतरतिरमाना, शंस नामाऽयदे हे ! ।

---

१. गणधरहितायाम् ।

सपदि शिरसि हस्तं, नाप्ययस्या अघं सद्—
धनुतरतिरमानाशं मनामायदेहे ॥ ४ ॥

## सुपार्श्वजिनस्तुतिः

(मालिनीवृत्तम्)

सततमतिलसन्त्या, कायकान्त्याऽस्तकार्तं—
स्वरमहसमवाऽलं स्वस्तिकान्तं सुपार्श्वम् ।
हृदि विदितनिकामाऽस्तोकलोकं गभीर्—
स्वरमहसमबालं, स्वस्तिकाऽन्तं सुपार्श्वम् ॥१॥

जिनगणमितमीहे, भेदिनं पथ्यपेतं—
नसिं तमहसमारं, भागशं बन्धनानाम् ।
गृहमिव यकमाऽऽहु—र्भीमताकान्तताऽस्ते—
नसितमहसमाऽऽर—म्भाऽगशम्बं धनानाम् ॥२॥

सृजतु जिनवचो वः, सत्फलं स्वान्तभूमा—
विह तदरममायं, ज्ञानकन्दं शवन्तम् ।
यदवति हरदुच्चै—र्दण्डयद्वादिलोकं,
विहतदरममाऽयं, ज्ञानकं दम्भवन्तम् ॥३॥

नमत नमदमर्त्याऽशेषरामाभिरामां,
गजगतिमुदिताशां, तामुदाराममानाम् ।
अनिशमिह सुपार्श्व—स्वामिमूर्ति नमर्त्या—
ग ! जगति मुदिता शान्ता मुदा राममानाम् ॥४॥

## चन्द्रप्रभजिनस्तुतिः
(मालिनीवृत्तम्)

विदधतमखिलानां शर्मणां देवचन्द्रां—
क ! विहितमहमाला ! पाऽऽर ! केलीनमाऽऽयम् ।
गहनभवपयोधौ, यानपात्रं स्तुवे त्वां,
कविहितमहमाऽऽलाऽपारकेऽलीनमायम् ॥१॥

जिननिकर ! मुनीनां, मण्डलं खण्डितांहः—
समर ! सकलमत्याभाऽव विद्यातरोग ।
प्रवरविदुरवीथ्या, वन्दिताहे, नितान्ताऽ—
समरस कलमत्या, भाववित् ! यातरोग ॥२॥

स्थितममृतपदे त-द्रातु जैनं वचो वः,
कमलमनवमाऽऽये, भीमहीने हितार्थम् ।
धृतिवनमनगगेयम्, शृण्वतां नाऽङ्गिनां सत्—
कमलमनवमायेभी महीनेहितार्थम् ॥३॥

सफलयतु जनानां, दीप्तिभिर्दीपयन्ती,
भृकुटिरसिकराऽऽसमा—शा मघोना सदाना ।
कृतनुतिररिघाते, बिभ्रती वक्त्रमुद्यद्—
भृकुटि रसिकरामाऽऽ—शामघोना सदाना ॥४॥

## सुविधिजिनस्तुतिः
(मालिनीवृत्तम्)

सुविधिरवधिरेन—श्छेदिनां वः स पाया—
दमृतरुचिरकामोदारधीरस् तमोहः ।

मुनिमनुजमनोऽब्धि,-प्रीणने यः सदाऽऽसी-

दमृतरुचिरकामो-दारधीरस्तमोहः ॥१॥

प्रमुखमृषिसमूहे, त जिनौघ ददान,

नमत लसदये शं, मानवा ! [1]धामवामम् ।

अभजत भगवन्तं, यं सुखश्रीर्भवार्त्यै—

नमतलसदयेशं, मानबाधाऽऽमवामम्[2] ॥२॥

भवपयसि गभीरे, मज्जतां रक्षणार्थं,

मत घनरसमर्थ, सज्जपङ्के बलेन ।

भगवदभिहिताना-मागमानागमाना-

मतघनर ! समर्थ, सज्जप केवलेन ॥३॥

हरतु सुरवधूभिः, शोभमाना कलाभाऽ—

गविनयमहितानां, भासमाना सुतारा !!

निकरमृषिवराणां, याऽस्तवीदस्तवैरा,

गवि नयमहितानां, भाऽसमाना सुतारा ॥४॥

## शीतलजिनस्तुतिः
(मालिनीवृत्तम्)

दलति वचसि लक्ष्म्या, शीतलाऽस्मिल्लसद्वा—

गुरुतरसि तवाऽऽधे—हीन ! मा नेत[3]राग[4]ः ।

अजनि जनितचेतो, यत्र सङ्गोऽङ्गभाजां,

गुरुतर ! [5]सितबाधे, हीनमानेतराग[6]ः ॥१॥

---

१. तेजोभिर्मनोज्ञम् । २. पराङ्मुखम् । ३. हे प्रापक ! । ४. आगः-अपराधम् । ५. कीलितबाधे । ६. वीतरागः ।

भजतु जिनसमाजं, प्रीतिपीनो जनोऽर्च्यं—
क्षणदममहताऽऽशं [1]कामवामं सदाऽऽयम् ।
न यदभिहितमत्र, श्रूयते ध्वस्तमोह—
क्षणदममहताऽश-ङ्काऽऽमवामं सदाऽयम् ॥२॥

सपदि भगवदुक्तेः, सूत्रपाठे मनोऽस्ता—
घ ! नर ! [2]मदय माया मोहदे हे ! सवर्णे ।
अतिसरससतत्त्वं, यत्र तत्त्वं विरेजे,
घनरमदयमाऽऽया–मोहदेहे ! ऽसवर्णे ॥३॥

जनयतु जनराजीं, साऽस्तशोकामशोका !,
श्रमरहितमताऽपा–ऽऽमोदिता लाभदेहा ।
प्रतिदिनमधितष्ठौ नीरजं नीरजाक्षा,
श्रमरहितमतापा-ऽऽमोदि तालाऽऽभदेहा ॥४॥

## श्रेयांसजिनस्तुतिः

(मालिनीवृत्तम्)

भवतु भगवतेऽस्मै, द्राग् नमस्तप्तचामी—
कररुचिरकराय, [3]श्रेयसे सर्वदा नः ।
अभवदभवहेतु–र्यः सतां शस्तसम्पत्–
कररुचिरकराय, श्रेयसे सर्वदानः ॥१॥

हृदि [4]वहत जिनेन्द्र–व्रातमायोज्य हस्ता–
विह तमरणमार–म्भाऽतमाऽऽयाऽसमोहे ।
वहनमिव गभीरे, प्रोचिरे यं भवाब्धौ,
विहतमरणमारं, भान्तमाऽऽयासमोहे ॥२॥

---

१. कामवत् मनोज्ञम् । २. हर्षयुक्तं कुरु । ३. श्रेयांसजिनाय । ४. स्मरत ।

परिचितिमुचितश्री-शोभनानां जिनानां,

जनय मदरमाया[1], हारिणा माऽऽगमेन[2] ।

सममसमशमानां, केलिगेहेन विद्वज्-

जन ! यमदरमायाहारिणामागमेन ॥३॥

मम सममुखलक्ष्म्याः, सा सुरी नूतनाष्टा-

पदशुचिरतिरामां, मानवी रातु लाभम् ।

अभजदिह महत्त्वं, याऽमरीपर्षदीताऽऽ-

पदशुचि रतिरामा, मानवीराऽतुलाऽऽभम् ॥४॥

## वासुपूज्यजिनस्तुतिः

(मालिनीवृत्तम्)

नम तममुमदाले !, तीर्थनाथं प्रमोदा-

दयि ! ततरममान-न्दाऽऽरधीरा जयाऽऽयम् ।

त्रिदशतरुमित्रोर्वी, स्वगिरे स्म प्रसूते,

दयिततरममानं, दारधीरा जया यम् ॥१॥

जिननिचय ! नयानां, रातु तद् युष्मदङ्घ्र्यो-

रपरुप ! मम लाभं, द्वन्द्वमालाऽमकाऽन्त ! ।

अमृतमिव रुजालीं, हन्ति सर्वां यदुच्चै-

रपरुपमगलाऽऽभ[3] !, द्वन्द्वमालामकान्त ! ॥२॥

समय ! सह सहस्वी, संस्तवः स्तान्नयान',

सदयनरमतेना-नीतिचारो जिनानाम् ।

मनसि मुनिवराणां, यत्र संसक्तचेताः,

सदयन[4] ! रमते ना, नीतिचारोऽजिनानाम् ॥३॥

---

१. प्रमोदश्रियः । २. लक्ष्म्यागमेन । ३. कामं मृदुलम् ।
४. शोभनमार्ग ! ।

सृजतु सपदि चण्डा !, सा निधीनां प्रदात्र्युच्—
चतुरगमधियाता—ऽपाऽऽपदं मा नवानाम् ।
वरतररतिराल्या, गीयते या गुणानां,
चतुरगमधियाऽता—पा पदं मानवानाम् ॥ ४ ॥

## विमलजिनस्तुतिः

(मालिनीवृत्तम्)

भवपयसि पतन् द्राग्, घ्नन्तमाऽऽपत्कृशानौ,
विमलमहममानां, राजिमाऽऽलम्बनाय ।
शरणमनुसरामि, स्वामिनं कान्दिशीको,
विमलमहमस्रानां, राजिमालं वनाय ॥ १ ॥

जहि सहितजिनेश—व्यूह ! सर्वत्र दुष्टाऽऽ—
रमरमहितसङ्घा—तं द्रवाऽऽधार ! हीन ! ।
मुदितमुनिमनस्क— श्चारुवाचा विचारै—
रमरमहितसङ्घा—ऽतन्द्र ! बाधाऽऽरहीन ।॥ २ ॥

श्रुतमवतु समूहं, व्याकुलं तज्जिनेन्द्राऽ—
भिहितमुदितमाऽऽय, दर्पकोपाऽऽपदा नः ।
न हि हृदयमभैत्सीत्, शृण्वता यत्काभाऽ—
भि हितमुदितमायं, दर्प्पकोऽपापदानः ॥ ३ ॥

नतिमति विजये ! त्व, वृन्दमेनश्चयेनाऽ—
व शमिषु रहितानां, मानवानां सभानाम् ।
अगतिमकृत शक्ति, यत्करस्थः सदैवाऽ—
वशमिपुरहितानां, मानवानां सभानाम् ॥ ४ ॥

## अनन्तजिनस्तुतिः

(मालिनीवृत्तम्)

जिनमनघमहं तं, नौमि कर्पूरपूरैः,[1]

सततमलनन्तं, योगिराजं समाऽऽनम् ।

अलममलमतीनां,[2] मान्यया जेतुमत्राऽऽ[3]

स ततमलमनन्त, यो गिराऽजं, समानम् ॥१॥

कलुषमिह भवन्न-स्तीर्थकृद्वृन्द ! हृद्भू—

रजनिपतितमो ह्—न्त्वाशु भावं दिताऽऽरम् ।

यतिततिरतिरम्या, प्राप्य यन्निर्जरौघै—

रजनि पतितमोहं, त्वा शुभा वन्दिताऽरम् ॥२॥

स्मर मनसि जिनानां, तं नयैर्दुःप्रवेशं,

पिहिततमसमाधि–प्राणनाशं कृतान्तम् ।

जगति गतिरनर्घ्या, ध्वंसमानेन येनाऽऽ[4]—

पि हिततमसमाधि, प्राणनाऽशं कृतान्तम् ॥३॥

सुखय निखिललोके, देव ! देवीनिषेव्यां—

कुशि ! बरतरनामा–तापदाना ! मदेहा ! ।

व्यसनविसरजात–व्यासया व्याकुलं त्वं,

कुशिवरतमना ! मा–ताऽऽपदाऽनामदेहा ॥४॥

## धर्मनाथजिनस्तुतिः

(मालिनीवृत्तम्)

समुदि हृदि वहामि, त्वामहं धर्म्म ! वज्र—

ध्वज ! नवलसमानं, सुव्रताऽऽयं समोहम् ।

---

१. कर्पूरतुल्यश्वासम् । २. अमलमतीनां–गणधराणाम् ।
३. दिदीपे । ४. लब्धा ।

जगदधिपमसूत, घ्नन्तमेनो नताऽर्च्याऽ–
छवजन ! बलसमानं, सुव्रता यं समोहम् ॥ १ ॥
विबुधभरवराः ! वः, स्तौतु राजीं जिनानां,
धिषणकविसमानां, गौरकामाऽबलानाम् ।
वचनमभिदधुर्यें, भाजनं हृष्टराजद्,
धिषणकवि समानां, गौरकामा बलानाम् ॥ २ ॥
वचनमपचिनोतु, प्रोक्तमाऽऽप्तेन वस्तद् –
विदितमदमलाभ, दानिर्धारेण नेत्रा,
यतिपतिततिरन्तः, शुद्धिबीजेन येनाऽऽ[1]—
वि दितमदमलाऽभ–न्दाऽनिधीरेणनेत्रा ॥ ३ ॥
पदयुगलमपाऽऽपत्, पातु कन्दर्प्पके ! हेऽ !,
निमिषमहितमुर्व्वी–मङ्ग ! लाभाऽवदाते ! ।
निखिलमधिगताया, हन्ति यस्या मनीषाऽ—
निमिषमहितमुर्व्वी, मङ्गलाऽभावदा ते ॥ ४ ॥

## शान्तिजिनस्तुतिः

(मालिनीवृत्तम्)

प्रतिदिनमुदितानां[2], सन्तु नस्ते मनोज्ञे —
क्षणनयन ! गवाऽऽरे-कान्त ! पुण्यानि शान्ते ! ।
अतिशयततिरासी–द्यस्य पार्श्वे प्रदत्त —
क्षणनयनगवारे[3] !, कान्तपुण्याऽनिशान्ते ! ॥ १ ॥
जनमिममवतात् स्वे, श्रीजिनानां चयोऽर्घ्यैः[4],
स पदि सुरसमूहै–रामयामोदितानाम् ।

१. आवि-प्रीणिता । २ सन्तुष्टानाम् ।
३. हे नगवारे !–वृक्षेषु जल ! । ४ शुभैः ।

न हृदि पदमधाद्यः, प्राणिनां पूजितांह्रिः,
सपदि सुरसमूहै–रामयाऽमोदितानाम् ॥२॥

हरतु हतदृशां सा, सार्ववाग्गर्वमालाऽऽ—
वलिनिभविहिताना–मक्षमोहाऽऽदराणाम् ।
अहृत हृदि गताया, सन्ततिर्धीमता धी—
बलिनि भविहिताना–मक्षमोहा दराणाम् ॥३॥

मनसि सुखमशेषं, त्वं सतां सस्तुता साऽ—
मलिनि कर मघोना, धाम निर्वाणि ! नीतेः ।
दलति कमलमेता, स्थाम यौकः कलीना—
मलिनिकरमघोनां, धामनिर्वाणिनीतेः ॥४॥

## कुन्थुजिनस्तुतिः

(मालिनीवृत्तम्)

भगवति रतिरुच्चै–रस्तु तस्मिन् हिते श्री,
भुवि भवंवति धीरे–ऽजेयसारे सदा मे ।
विदधति दधिशुद्धं, ध्यानमिद्धाऽऽस्तपद्मा–
भु विभववति धीरे–जेऽयसारेऽसदामे ॥१॥

चरणयुगमयौघैः रातु तेषां तदाऽऽज्ञा—
बलिनि कृतिनि दानं, पुण्यमानां चितानाम् ।
वचनमसुखमुच्चै–रर्हतां हन्ति दोषाऽऽ—
बलिं निकृतिनिदानं, पुण्यमानाञ्चितानाम् ॥२॥

सृजतु भगवतां शं, वाणिगुम्फो जनौघ—
न्निह तव लयशोभं, दानिदोषाकराणाम् ।
विदधदसुदृशां द्राग्, वृन्दमाप्तेषु योऽदा—
न्निहतबलयशो भं–दानि दोषाऽऽकराणाम् ॥३॥

वितरतु जनतासु, श्रीबले ! धीबलस्याऽऽ –
सु हृदिह तव लाभं, सारवेगेऽयकान्ते ! ।
रचयसि रिपुपूगं, या स्थिता त्व [1]पयोमुक्–
सुहृदि हृतबलाभं, [2]सारवे गेयकान्ते ! ॥४॥

## अरजिनस्तुतिः

(मालिनीवृत्तम्)

मनसि जिनमृषीणां, श्रेणि ! तं रक्ष साक्षा –
दरमघबलयाना, मुक्तिरङ्गाऽक्षराणाम् ।
श्रवणरुचिमकापी–द्यस्य राज्ञां सुभोगाऽऽ–
[3]दरमघवलयाना–मुक्तिरङ्गाक्षराणाम् ॥१॥
असुमतिसुखमूलं, ते जिनेन्द्राः ! श्रियश्चिद्–
वति भवत नुताया, मानसङ्गा [4]नदीनाः ।
जगद नरि निदानं, ये प्रसन्नं सदैवाऽ–
वति भवतनुतायां, मानसं गा[5] न दीनां ॥२॥
स्वहृदि समयमुक्तं, वल्लभं साधुराजा–
मव तमसवशानां, नागराऽजेन सार्थम् ।
अतनुत महितो यः, सप्रकाशं जनानां–
मवतमसवशानां, नागराजेन सार्थम् ॥३॥
रचय सुभगभाव, धारिणी ता जिताज्ञाऽ–
नलसं ! दृशि ! महीला–सु प्रकाशामितासु ।
अहिततति‌षु यस्या, लेखलेखा बभूवाऽ–
नलसदृशि [6]महीला–सुप्रकाशाऽमितासु ॥४॥

---

१ मयूरे । २ शब्दायमाने । ३ 'विलास' । ४ सागराः ।
५ वाचः । ६ महती ईडा यस्या ।

# मल्लिजिनस्तुतिः

(मालिनीवृत्तम्)

सृज, सुखमखिलं मे, मल्लिनाथ ! प्रकोपे—
रणरणकमलाऽली–नाग ! तापाऽपमान ! ।
रतिरजनि मुनीनां, यन्मुखे पूरितैनो—
रणरणकमलाऽली[1], नाऽगताऽपापमान[2] ! ॥१॥

स भवतु जिनसार्थः, शर्म्मणेऽकर्म्मणे[3] सद्—
विभवरजनिनेताऽऽपन्नयामोऽदिताय[4] ।
नतिरमरगणेनाऽ–कारि यस्मै विराजद्—
विभवरजनिनेताऽऽपत् नयाऽऽमोदिताय ॥२॥

पथि नयतु विमुक्ते, साऽर्हतां गीः प्रकामाऽ—
समसमितिमितानां, श्रेयसां मा लयानाम् ।
विधिरजनि यतीनां, यत्र दिग्भिर्गतांहः—
समसमितिमितानां, श्रेयसां माऽऽलयानाम् ॥३॥

प्रकुरु भुजगभर्तुः[5], स्थायि धर्म्मे मनस्त्वं,
मम रमणि ! सवर्णे, पुण्यहृद्यातमाया[6] ! ।
हितहृगसि नितान्तं, वोधिदाने जनाना—
ममरमणिसवर्णे !, पुण्यहृद्याऽतमा[7] या ॥४॥

---

१. औत्सुक्यम् । २. अविद्यमानो. । ३. गणधराणां चन्द्रः ।
४. अखण्डिताय । ५. धरणेन्द्रस्य । ६. पूतं मनो यस्याः सा ।
७. नास्ति पातकं यस्याः सा ।

## मुनिसुव्रतजिनस्तुतिः
(मालिनीवृत्तम्)

जन ! मनसि वह त्व, सुव्रतं नुन्ननव्यां[1]—
जनमहसमलोभ, गोत्रधीरोर्जिताऽऽभम् ।
अभजदृषिसमाजो, यं जिनं प्रीतधीमज्—
जनमहसमलोऽभङ्गोऽत्र धीरोऽर्जिताऽभम् ॥१॥
वसतु वशिवरा सा, राजिरिद्धा जिनानां,
मनसि शमवशानां, बोऽधिकाऽऽमन्ददाना ।
समजनि शिवमार्गो, या समूहे मुनीना—
मनसि शमवशानां, बोधिकामं ददाना ॥२॥
रविमिव कुरु गुम्फं, त तमोऽघ्न जिनोक्तेः,
श्रवसि महदया या, मोदिताऽमर्त्यचक्रम्[2] ।
यदधिगतिरनैषी[3]—दध्वनि प्रीतवृद्ध—
श्रवसि महदयायामोदिता मर्त्यचक्रम् ॥३॥
वितरतु नरदत्ता, सा नवीना मुनीनां,
सदसि मम रमा न्या-याततापाक्षमाऽऽला ।
व्यरुचदिह दधाना या, धियं वैरिवल्ली—
सदसिममरमान्या, याततापाऽक्षमाला ॥४॥

## नमिजिनस्तुतिः
(मालिनीवृत्तम्)

विजयसुत ! भवान् घ्नन्, सिद्धये नः स भूया—
दरितमसि महीन., पङ्कजातं सदाऽऽयः ।

१. निर्जिनः । २. अमर्त्या एव कोकाः येन तम् । ३. इन्द्रः ।

शमिषु सुचिति तिष्ठन्, वक्त्रवातैः सृजंस्त्वं,
दरितमसि महीनः, पङ्कजातं सदा यः ॥१॥

भवकृतिषु[1] नगौघं, तं जिनानां चरित्राऽ—
सुमनसमबलानां, मालसद्धिभ्रमाणाम् ।
न दृग् नयदमार्ग, यं चिरं प्रीतभूयः—
सुमनसमबलानां, मालसद्विभ्रमाणाम्[2] ॥२॥

वचनमवदनिन्द्य, तज्जिनानां जनौघाऽऽ—
शुगमनयदमानञ्चाऽरुजं भाहितानाम् ।
अभिमतमवसान, यत्पिनाकीव पुष्पा—
शुगमनयदमानं, चारु जम्भाऽहितानाम्[3] ॥३॥

भव सुरतरु रिद्धं, साधुवृन्द स्तुवन्ती,
रतिकरकरवालाऽ, नीति गान्धारि ! दाने ।
अभवदिह मराले—संस्थिता या क्षमोच्चै—
रतिकरकरवालाऽ—नीतिगान्धाऽऽरिदाने[4] ॥४॥

## नेमिजिनस्तुतिः

(मालिनीवृत्तम्)

तिलकसम ! तदस्तु, प्रीतये पादपद्म,
मदनवलयमारे !, ऽराम ! नेमे ! यदूनाम् ।
श्रियममरवरेण्यै—र्विद्रुमाणां सृजन्तो,
मदनवलयमारे !, राम ! नेमे यदूनाम् ॥१॥

---

१ ससारकृत्येषु । २ दम्भेन शोभना विभ्रमाः यासाम् । ३ शक्राणाम् ।
४ नयरहितो ग्रन्थसमूहो ये च तेऽरयः तेषां खण्डने इत्यर्थः ।

मम भवतु जिना ! वः, संचये धीर्गतांहो—

विकृति[1]निभयमानां, भो ! जराऽजेयसारे ।

स्वदृगसुमति येन, प्रीतिपात्रं सदेवाऽऽ—

वि कृतिनि भयमानाऽम्भोजराजेऽयसारे[2] ॥२॥

कुरु समय ! जिनानां, स्वं प्रसादं समे कुदं[3]—

वसतिपतितमानन्दाऽऽयिनं पुण्यवर्ण ! ।

हृदि दधदपवर्गोऽ–यं जनस्त्वां मुखानां,

वसति पतितमान,–दायिनं पुण्यवर्ण ! ॥३॥

सुकृतवति मयि त्वं, सा स्वचेतोऽम्ब ! विघ्नाऽऽ—

वलिनिघनमघोनाऽ–वाऽरणाऽरौद्रवेरे ! ।

स्थितवति नृगणेन, स्तूयसे या महीयो—

वलिनि[4] घनमघोना, वारणारौ द्रवे[5]व ! रे ! ॥४॥

## पार्श्वजिनस्तुतिः

(मालिनीवृत्तम्)

तनुमतिमहिमाढ्यः, सोऽस्तु पार्श्वः परश्री—

पदमलमतिराजी, या मिनीनो महाय[6] ।

गृहमणिरिव योऽभूत्, भूरये हृदि स्थितोऽस्ता—

पदमलमतिराजी- यामिनीनो[7] महाय ॥१॥

---

१ निभः-कपटः । २ भाग्येन प्रधाने । ३ कोपशशिराहुम् ।
४ सिंहे: । ५ द्रवे-नर्मणि, इरा-वाग् यस्या तत्सं । ६ प्रकाशाय ।
७ कलहयामिनी-सूर्यः ।

पू. पं. श्रीमेरुविजयजीगणिप्रणीता–यमकबद्ध–श्रीजिनानन्द-

# स्तुतिचतुर्विंशतिका

## श्रीआदिजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

आनन्दमन्दिरमुपैमि तमृद्धिविश्व—
नाभेय ! देवमहितं सकलाभवन्तम् ।
लब्ध्वा जयन्ति यतयो भवयोधमादौ,
नाभेयदेवमहितं सकला भवन्तम् ॥१॥

तं तीर्थराजनिकरं स्मर मर्त्य ! मुक्तं,
पद्मेक्षणं सुमनसां प्रमदा दरेण ।
वृष्टिं व्यधुर्विविधवर्णजुषां यदंह्रि-
पद्मेऽक्षणं सुमनसां प्रमदादरेण ॥२॥

चित्ते जिनप्रवचनं चतुराः ! कुरुध्वं,
सद्धेतुलाञ्छितमदो दितसाङ्गजालम् ।
यत् प्राणिनामकथयद् वरवित्तिलक्ष्मीं,
सिद्धेऽतुलां छितमदोदितसाङ्गजालम् ॥३॥

सा मे चिनोतु सुचिरं चलचञ्चुनेत्रा,
चक्रेश्वरीमतिमतान्तिभिरम्मदाभा ।
या हन्ति हेलिरुचिवद् विलसन्नितम्ब—
चक्रेश्वरी मतिमतां तिमिरं मदाशा- ॥४॥

## अजितजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

सद्युक्तिमुक्तितणीनिरतं निरस्त—
रामानवस्मरपरं जितशत्रुजातम् ।
अन्तर्जवेन विजयाङ्गजमात्तधर्म्मं—
रा मानव ! स्मर परं जितशत्रुजातम् ॥१॥

विश्वेश्वरा विशसनीकृतविश्वविश्वा—
वामप्रतापकमलास्ततमोविपक्षाः ।
निघ्नन्तु विघ्नमघवन्तमनन्तमाप्ता,
वामप्रतापकमलास्ततमोविक्षाः ॥२॥

पीयूषपानमिव तोषगशेषपुन्सां,
निर्मायमुन्चरणकृद् भवतो ददानम् ।
ज्ञानं जिन ! प्रवचनं रचयत्वनल्पं,
निर्मायमुन्चरणकृद् भवतोददानम् ॥३॥

श्रेयःपरागनलिनी नयतां नवाङ्गी,
सा मे पराऽजितबला दुरितानि तान्तम् ।
कल्याणकोटिमकरोन्निकरे नराणां,
सामे पराजितबलाऽदुरिता नितान्तम् ॥४॥

## शम्भवजिनस्तुतिः

वसन्ततिलकावृत्तम्)

या दुर्लभा भवभृतामृभुवल्लरीव,
मानामितद्रुममहिमाभ ! जितारिजात ! ।

विदधतु दमिवृन्दं, प्रीणयन्तः स्वरीशै-
जगदुरुदयमाप्ता-स्ते नता रामपार्श्वम् ।
रविरुच इव मार्ग्गामार्ग्गयोर्भेदमुच्चै-
जगदुरुदयमाप्ताः, स्तेनताऽऽरामपार्श्वम् ॥२॥
जगदवतु मतार्था, वाग् जिनानां विराजत्—
भुजगतिचरणाना, साऽध्रुताऽऽभा सुराणाम् ।
मतिमुदयमनैपीद्यद्रहस्यं हरश्री—
भु जगति चरणानां, साधुताभासुराणाम् ॥३॥
शिरसि सृज सतां स्व, श्रीकर शर्म्म पद्मा—
वति ! जननि ! करं साऽरं सदाऽऽभं ददाना ।
सुतमिव भवती या, पुण्यभाजं गुणाढ्याऽ—
वति जननिकरं सारं सदा भन्ददाना ॥४॥

## महावीरजिनस्तुतिः

(मालिनीवृत्तम्)

जिनमवृजिनमीशं, तं स्तुतं त्रैशलेयं,
चरममभवदारं, ज्ञातसिद्धार्थजातम् ।
बलवदपि न जेतुं, यं समर्थः समस्तोच्च्—
चरममभवदाऽऽरं, ज्ञातसिद्धाऽर्थजातम् ॥१॥
तमनुसर शरण्यं, स्तोममीश जिनानां,
जन ! कमलसमाऽऽनं, सोमवाचंयमानाम् ।

१ महत्कारुण्यम् । २ परशुसमूहम् । ३ सर्वदेवेभ्यः प्रौढा रम्या यस्य । ४ सत्कीर्ति ।

यमृभुविभुरनंसी-त्वोषमुज्झ्रन्तमेनो—

जनकमलसमानं, सोमवाचं[1] यमानाम् ॥२॥

प्रवचन ! वचनश्री-सिद्धयेऽस्मासु भूयाः,

भविकमल[2]सदंशो !, हृद्यवर्णाऽङ्गजालम् ।

हरदनवधि यस्यै-कोऽपि विश्वस्य तत्त्वद्—

भविक[3]मलसदंशो, हृद्यवर्णाऽङ्गजाऽऽलम् ॥३॥

सृजतु सुखमशेषं, साऽऽशु सिद्धायिका नः,

स्तन[4]नयमहितमुक्ता, पुण्यधीरेणनेत्रा ।

अभजदभिनतं या, स्वर्गिणां ज्ञातराज—

स्तनयमहितमुक्ता, पुण्यधीरेण नेत्रा ॥४॥



---

१. कर्पूरवत् वाग् यस्य तम् । २. सूर्य ! । ३. शिवम् ।
४. स्तनद्वयधृतमुक्ताफलानि यस्या ।

पू. पं. श्रीमेरुविजयजीगणिप्रणीता—यमकबद्ध—श्रीजिनानन्द-

# स्तुतिचतुर्विंशतिका

## श्रीआदिजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

आनन्दमन्दिरमुपैमि तमृद्धिविश्व—
नाभेय ! देवमहितं सकलाभवन्तम् ।
लब्ध्वा जयन्ति यतयो भवयोधमादौ,
नाभेयदेवमहितं सकला भवन्तम् ॥१॥

तं तीर्थराजनिकरं स्मर मर्त्य ! मुक्त,
पद्मेक्षणं सुमनसां प्रमदा दरेण ।
वृष्टिं व्यधुर्विविधवर्णजुषां यदंह्रि—
पद्मेऽक्षणं सुमनसां प्रमदादरेण ॥२॥

चित्ते जिनप्रवचनं चतुराः ! कुरुध्वं,
सद्धेतुलाञ्छितमदो दितसाङ्गजालम् ।
यत् प्राणिनामकथयद् वरवित्तिलक्ष्मीं,
सिद्धेऽतुलां छितमदोदितसाङ्गजालम् ॥३॥

सा मे चिनोतु सुचिरं चलचञ्चुनेत्रा,
चक्रेश्वरीमतिमतान्तिभिरस्मदाभा ।
या हन्ति हेलिरुचिवद् विलसन्नितम्ब—
चक्रेश्वरी मतिमतां तिमिरं मदाशा- ॥४॥

## अजितजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

सद्युक्तिमुक्तितणीनिरतं निरस्त—
रामानवस्मरपरं जितशत्रुजातम् ।
अन्तर्जवेन विजयाङ्गजमात्तधर्म्म—
रा मानव ! स्मर परं जितशत्रुजातम् ॥१॥

विश्वेश्वरा विशसनीकृतविश्वविश्वा—
वामप्रतापकमलास्ततमोविपक्षाः ।
निघ्नन्तु विघ्नमघवन्तमनन्तमाप्ता,
वामप्रतापकमलास्ततमोविक्षाः ॥२॥

पीयूषपानमिव तोषमशेषपुन्सां,
निर्मायमुच्चरणकृद् भवतो ददानम् ।
ज्ञानं जिन ! प्रवचनं रचयत्वनल्पं,
निर्मायमुच्चरणकृद् भवतोददानम् ॥३॥

श्रेयःपरागनलिनी नयतां नवाङ्गी,
सा मे पराऽजितबला दुरितानि तान्तम् ।
कल्याणकोटिमकरोन्निकरे नराणां,
सामे पराजितबलाऽदुरिता नितान्तम् ॥४॥

## शम्भवजिनस्तुतिः

वसन्ततिलकावृत्तम्)

या दुर्लभा भवभृतामृभुवल्लरीव,
मानामितद्रुममहिमाभ ! जितारिजात ! ।

श्री शम्भवेश ! भवभिद् भवतोऽस्तु मेवा—
ऽमाना मितद्रुमहिमाभ ! जितारिजात ! ॥१॥
नाशं नयन्तु जिनपङ्कजिनीहृदीशा,
निष्कोपमानकरणानि तमांसि तानि।
ज्ञानद्युता वहुभभ्रमणेन तप्त—
निष्कोपमानकरणा नितमां सितानि ॥२॥
सिद्धान्त ! सिद्धपुरुषोत्तमसंप्रणीतो,
विश्वाववोधक ! रणोदरदारधीरः।
भव्यानपायजलधेः प्रकटस्वरूप—
विश्वाऽव वोधकरणोंऽदरदायधीरः ।३।
माकन्दमञ्जरिरिवान्यभृतां भरैर्या,
देवैरसेवि दुरितारिरसावलक्षा।
दारिद्र्यकृन्मम सपत्नजनेऽतिदुःख—
दे वैरसे विदुरितारिरसा वलक्षा ॥४॥

## अभिनन्दनजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

निःशेषसत्त्वपरिपालनसत्यसन्धो,
भूपालसंवरकुलाम्वरपद्मवन्धो !।
कुर्वन् कृपां भवभिदे जिन ! मे विनम्र—
भूपाल संवरकुला वरपद्म ! वन्धो ! ॥१॥
यत्पाणिजव्रजमभाद् धुतवुद्धनीर—
जं बालघर्मकरपादसमस्तपद्मम्।
तं नौमि तीर्थकरसार्थ ! भवन्तमेनो—
जम्वालघर्म ! करपादसमस्तपद्मम् ॥२॥

कामं मते जिनमते रमतां मनो मेऽ—
मुद्दामकामभिदसंवरहेतुलाभे ।
चण्डद्युताविव वितन्वति सत्प्रकाश—
मुद्दामकामभिदसवरहेऽतुलाभे ॥३॥
धर्नद्विषां क्षयमधर्मजुषा करोतु,
सा रोहिणीसुरभियातवपू रमाया ।
यस्या बभौ हृदयवृत्तिरजस्रमूना,
सारोहिणी सुरभिया तव पू रमायाः ॥४॥

## सुमतिजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

भक्तिव्रजेन विहिता तव पादपद्म—
सत्काऽमिता सुमनसां सुमते ! नतेन ।
लब्धा सुखेन जिन ! सिद्धिसमृद्धिवृद्धिः,
सत्कामिता सुमनसां सुमतेन तेन ॥१॥
येषां स्तुवन्त्यपि ततिश्चरणानि नृणा—
मज्ञानघस्मरपराभवभां जिना वः ।
दुःखाम्बुधाविव घनं मरुतः क्षिपन्ता—
मज्ञाऽनघस्मरपरा भवभाञ्जि नांवः ॥२॥
या हेलया हतवती कुमतिं कुपक्षै—
र्विज्ञा नराऽजितपदा शिवरा जिनेन ।
वाचं तमस्सु रचितां हृदि धेहि शैल—
विज्ञानराजितपदा शिवराजिनेनम् ॥३॥
उद्यद्रदा मृगनदाविलकज्जलाङ्क—
काली सुरीतिमतिरा जितराजदन्ता ।
मुष्णातु मर्मजननीमनिशं मुनीनां,
काली सुरीतिमतिराजितराजदन्ता ॥४॥

## पद्मप्रभजिनस्तुतिः
(वसन्ततिलकावृत्तम्)

भव्याङ्गिवारिजविबोधरविर्नवीन –
पद्मप्रभेशकरणोऽजितमुक्तिकान्तः ।
त्वं देहि निर्वृतिसुखं तपसा विभञ्जन्,
पद्मप्रभेश ! करणोर्जितमुक्तिकान्तः ॥१॥

सिद्धिं सतां वितर तुल्यगते ! गजस्य,
विध्वस्तमोहनतमा नवदानवारेः ।
तीर्थङ्करव्रज ! दधद् वदन विभास्त –
विध्वस्तमोह ! नतमानवदानवारे ! ॥२॥

गम्भीरशब्दभर ! गर्वितवादिवृक –
वोथीकृतान्तजनकोपम ! हारिशान्तिः ।
त्रायस्व मां जिनपते: प्रवरापवर्ग –
वीथी कृतान्त ! जनकोपमहारिशान्तिः ॥३॥

या सेव्यते स्म दनुजैर्वरदायिवक्त्र –
श्यामावरा सुरवशोचितदैत्यरामा ।
श्याम निरस्यतु ममेयमनन्तशोकं,
श्यामा वरा मुरवशोचितदैत्य रामा ॥४॥

## सुपार्श्वजिनस्तुतिः
(वसन्ततिलकावृत्तम्)

यं प्रास्तवीदतिशयात्मृताशनानां,
कान्ता रसारसपदं परमानवन्तम् ।
विज्ञः श्रियं भजति कां न नतः सुपार्श्वं,
कां तारसारसपदं परमानवन्तम् ॥१॥

नि.शेपदोषरजनोकजिनीशमाप्त-
संसारपारगतमण्डलमानमारम् ।
प्राज्यप्रभावभवनं भुवनातिशायि-
सं सारपारगतमण्डलमानमारम् ॥ २ ॥
सर्वार्थसार्थखचितं रचितं-यतीन्द्र-
भारा ! जिनेन मतमानतमानवेनम् ।
हेलावहेलितकुकर्म शिवाय शर्म-
भाराजिने नमत मानतमानवेनम् ॥ ३ ॥
भक्ति बभार हृदये जिनसामजानां,
शान्ताशिवं शमवतां वमुधामदेहा ।
सीमन्तिनी ऋतुभुजां कुरुतां सदा सा,
शान्ता शिवं शमवतां वसुधामदेहा ॥ ४ ॥

## चन्द्रप्रभजिनस्तुतिः
(वसन्ततिलकावृत्तम्)

पूज्यार्चितश्चतुरचित्तचकोरचक्र-
चन्द्र ! प्रभावभवनं दितमोहसारः ।
ससारसागरजले पुरुषं पतन्तं,
चन्द्रप्रभाव भवनन्दितमोहसारः ॥ १ ॥
तीर्थेशसार्थ ! नतिरस्तु भवत्युदाराऽऽ-
रम्भागसामज ! समाननतारकान्ते ! ।
सन्दोहराहुबलनिर्मथने तमःसं-
रम्भागसामऽजसमान ! नतारकान्ते ॥ २ ॥
सम्यग्दृशामसुमतां निचये चकार,
सद्भा रतीरतिवरा मरराज्ञिगे या ।

दिश्यादवश्यमखिलं मम शर्म जैनी,
सद्भारती रतिवरामरराजिगेया ॥ ३ ॥

अध्यासिता नवसुधाकरविम्बदन्तं,
स्वानेकप कमलमुक्तघनाघ ाभम् ।
वज्राङ्कुशी दिशतु शं समुपात्तपुण्य-
स्वाऽनेकपङ्कमलमुक्तघना घनाभम् ॥ ४ ॥

## सुविधिजिनस्तुतिः
(वसन्ततिलकावृत्तम्)

निर्वाणमिन्दुयशसां वपुषा निरस्त-
रामाङ्गजोऽरुज ! गतः सुविधे ! निधे ! हि ।
विस्तारयम् सपदि शं परमे पदे मां,
रामाङ्गजोरु जगतः सुविधे ! निधेहि ॥ १ ॥

संप्रापयन्नतिमतोऽमुमतोऽतिचण्ड-
भास्वन्महाः शिवपुरः सविधेऽयगस्तः ।
पायादपायरहितः पुरुपान् जिनौघो,
भास्वन्महाः शिवपुरः सविधेयशस्तः ॥ २ ॥

ये प्रेरिताः प्रचुरपुण्यभरैर्विनम्राऽ-
पापायमानव ! सुधारुचिरङ्गतारम् ।
कुर्वन्तु ते हृदि भवद्वचनं व्यपास्त-
पापायमान ! वसुधारुचिरं गतारम् ॥ ३ ॥

त्वं देवते ! विशदवाग्विभवाभिभूत-
सारामृता समुदितास्यसुतारकेशा ।

नृगामुपल्लवचमूमुचितप्रदाने-
सारामृता सभुदिता स्य सुतारकेशा ॥ ४ ॥

## शीतलजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

पीडागमो न परिजेतरि दत्तमर्त्या-
नन्दातनूद्भवभयायशसां प्रसिद्धे ! ।
चित्ते विवर्तिनि विशा भवति त्वयीश !
नन्दातनूद्भव ! भया यशसां प्रसिद्धे ॥ १ ॥
यच्चित्तवृत्तिरवधीत् तमसां प्रशस्ता-
या तापदं मनसि तारतमोरु जालम् ।
त मानवप्रकर ! तीर्थकृता कलापं,
यातापद मन सितारतमोरुजालम् ॥ २ ॥
गायन्ति सार्धममरेण यशस्तदीयं,
रम्भा जिनागम ! दवारिहरे सवर्णे ।
ध्यानं धरन्ति तव ये पठने सदा सा-
रम्भाजिनागमदवाग्हिरेऽसवर्णे ॥ ३ ॥
या भेजुषी जिनपदं न्यदधद्-विशाला-
पत्त्रं परागमधुर विगतामशोकाम् ।
स्मेराननां सुजन ! भो स्मर तां सहस्र-
पत्रं परागमधूर विगतामशोकाम् ॥ ४ ॥

## श्रेयांसजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

श्रेयांससर्वविदमङ्गिगण ! त्रियामा-
कान्ताननं तमहिमानम मानवाते ।

यं भेजुषो भवति यस्य गुणान् न यातं,
काान्ताननन्तमहिमानममा नवा ते ॥ १ ॥

लक्ष्मीमितानभजतभुं सदोऽहि शैल-
राजाननन्तमहिमप्रभवामकायम् ।
भिन्दन्तमाप्तनिकर समुपैमि राका-
राजाननं तमहिमप्रभवामकायम् ॥ २ ॥

निर्वाणनिर्वृतिपुषां प्रचुरप्रमाद-
मारं भवारिहरिणा सममाऽऽगमेन ।
विद्वज्जनः परिचयं चिनुतां जिनाना-
मारम्भवारिहरिणा सममागमेन ॥ ३ ॥

यस्याः प्रसादमधिगम्य बभूव भूस्पृक्,
सारातुलाभममला यतिमानवीनः ।
शं तन्वती मतिमताममरी शिवानां,
सा रातु लाभममलायति मानवी नः ॥ ४ ॥

## वासुपूज्यजिनस्तुतिः
(वसन्ततिलकावृत्तम्)

एनांसि यानि जगति भ्रमणार्जितानि,
पर्जन्यदानवसुपूज्य ! सुतानवानि ।
त्वन्नाम तानि जनयन्ति जना जपन्तः,
पर्जन्यदान ! वसुपूज्यसुतानवानि ॥ १ ॥
ध्यानान्तरे धरत धोरणिमीश्वराणां,
वाचंयमा ! मरणदामितमोहनाशाम् ।

दत्तेहितां भगवतामुपकारकारि-
वाच यमामरणदामितमोहनाशाम् ॥२॥

सोऽयं हिनस्ति सुकृती समवाप्य शास्त्र-
विद्यातरो गवि भव भवतोदितारम्।
श्रोत्रैर्वचोऽमृतमधादिह सर्वभाव-
विद्! यातरोगविभवं भवतो दितारम् ॥३॥

भक्त्या यया यतिगणः समपूजि भिन्न-
चण्डेतिकोऽमलकले! वरशोभनाभे!।
पण्डामखण्डिव्रतमां घटयाऽऽशु पुंसां,
चण्डे!ऽतिकोमलकलेवरशोभनाभे! ॥४॥

## विमलजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

सिंहासने गतमुपान्तसमेतदेव—
देवे हितं सकमल विमल विभासि।
आनर्च यो जिनवरं लभते जनौघो,
देवेहितं स कमल विमल त्रिभासि ॥१॥

ते मे हरन्तु वृजिन भवतां नियोगा,
येऽनर्थद भविरतिप्रियदा न दीनाः।
तीर्थाधिपा वरदमं दधिरे दयाया,
येऽनर्थदम्भविरतिप्रियदा नदीनाः ॥२॥

दूरीभवन् भवभृतां पृथु सिद्धिसौध,
सिद्धान्तराम! नय मा नयमालयानाम्।

यं त्वां बभार हृदये शमिनां समूहः,
सिद्धान्त ! रामनयमानयमालयानाम् ॥३॥
सा कल्पवल्लिरिव वोऽस्तु सुगी सुखाय,
रामासु भासिततमा विदिताऽमितासु ।
श्रेणीषु या गुणवतां करुणां सरागा,
रामा सुभा सिततमा विदितामितासु ॥४॥

## अनन्तजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

प्रज्ञावतां तनु तमस्तामनन्त—
माऽऽयासमेतपरमोहमलो भवन्तम् ।
स्याद्वादिनामधिपते ! महतामनन्त !,
मायाऽसमेत ! परमोहमलोभवन्तम् ॥१॥
चक्रे मराल इव यो जगतां निवास,
कामोदितावनिघनादृत ! मानसे नः ।
उर्वीमिवावनिवरो व्रजं ! तीर्थपानां,
कामोदिताऽव निधनादृतमानसेनः ॥२॥
स त्वं सतत्त्व ! कुरु भक्तिमतामनन्या,
यामागमोहसदनं ततमोदमारम् ।
यश्चिन्तितार्थजनको यमिनां जघान,
यामागमो हसदनन्ततमोदमारम् ॥३॥
या वर्जित व्रजमुदारगुणैर्मुनीना—
मस्ताघमानमतिं रङ्गमना दरेण ।

शमङ्कुगी दिशतु सा मम मङ्गलाना—
मस्ताघमानमतिरङ्गमनादरेण ॥४॥

## धर्मनाथजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

सद्धर्म ! धर्म ! भवतु प्रणतिर्विमुक्त—
मायाय ते तनुभवाय धरेशभानो. ।
यस्याभिधानमभवद् भविनां पवित्र—
मायायते!ऽतनुभवाय धरेशभानोः ॥१॥

दन्दह्यते स्म दमहव्यभुजा जिनालो,
संपन्नरागमरमानवनी रदाभाः ।
कीर्तीः करोतु दधती कुशलानि सा सत्—
सम्पन्नरागमरमानवनीरदाभा ॥२॥

वाचयमैर्धृतवती धरणीव गुर्वी,
सत्कामसङ्गमरसाजरसोपमाना ।
सा वाक् सता व्यथयतु प्रथितं जिनेन्द्र—
सत्काऽऽमसङ्गमरसा जरसोऽपमाना ॥३॥

सप्रापयत्यसुमतः कविकोटिकाम्यां,
प्रज्ञप्तिकामितरसाममरोचिता या ।
सा केकिन गतवती द्यतु दुष्टदोषान्,
प्रज्ञप्तिकाऽमितरसा मम रोचिताया ॥४॥

## शान्तिजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

यं स्तौति शान्तिजिनमिन्द्रततिर्नितान्तं,
श्रीजातरूपतनुकान्तरसाभिरामम् ।
शान्ति सुरीभिरभिनूत ! नुदन् स नुन्न—
श्रीजातरूप ! तनु कान्तरसाभिरामम् ॥१॥
राजीभिरर्चितपदाऽमृतभोजनाना,
मन्दारवारमणिमालितमस्तकानाम् ।
पुंसां ददातु कुशल जिनराजमालाऽ—
मन्दारवाऽरमणिमालितमस्तकानाम् ॥२॥
यो गोस्तनीमधुरतां निजहार हानि —
च्छिन्नाशताजिनवरागमहारिवार ! ।
माधर्यमेति न तवाधिशुचौ मधुत्र —
च्छिन्ना सिता जिनवरागम ! हारिवार ! ॥३॥
श्रीआचिरेयचरणान्तिकसक्तचित्ता,
निर्वाणिनी रसनरोचितदेहकान्ता ।
मां शर्मणां पृथु विधेहि गृह सुराणां,
निर्वाणि ! नीरसनरोचितदेह कान्ता ॥४॥

## कुन्थुजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

मां कुन्थुनाथ ! शमथावसथः प्रकृष्ट—
स्थानं दमाय नय मोहनवारिराशेः ।

मध्येऽम्बुनाथतुलना कलयन्ननल्पा —
स्थानन्दमाय ! नयमोहनवारिराशेः ॥१॥

नित्य वहेम हृदये जिनचक्रवाल—
मानन्ददानमहित नरकान्तकारि ।
मुक्ताकलापमिव हारिगुण धुनान,
मानं ददानमहित नरकान्तकारि ॥२॥

वाचां ततिर्जिनपतेः प्रचिनोतु भद्रं,
भ्राजिष्णुमा नरहिताऽकलिताऽपकारै ।
सेव्या नरैर्धवलिमास्तसुधामुधाभा—
भ्राऽजिष्णुमानरहिता कलितापकारैः ॥३॥

या जातु नान्यमभजज्जिनराजपाद—
द्वन्द्वं विना शयविभाकरराजमाना ।
हे आबले ! वरबले ! समसङ्कंकस्य,
द्वन्द्व विनाशय विभाकरराजमाना ॥४॥

## अरजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

पीठे पदोर्लुठति यस्य सुरालिरग्र—
सेवे सुदर्शनधरेऽशमनं तवामम् ।
त्वां खण्डयन्तमर ! तं परितोषयन्तं,
सेवे सुदर्शनधरेशमनन्तवामम् ॥१॥

सर्वज्ञसंहतिरवाप शिवस्य सौख्यं,
सारं भवारिजनिशापतिरोहितश्रीः ।

शुद्धां धियं कृतधियां विदधातु नित्यं,
सा ऽऽरम्भवारिजनिशापतिरोहितश्रीः ॥२॥

हन्ति स्म या गुणगणान् परिमोचयन्ती,
साभा रतीशमवतां भवतोदमायाः ।
ज्ञानश्रिये भवतु तत्पठनोद्यतानां,
सा भारती शमवतां भवतो दमाया ॥३॥

चञ्चद्विलोचनमरीचिचयाभिभूत—
मारञ्जता स्फटिकरोचितभालकान्ता ।
चक्रं सतामवतु चक्रधरा सुपर्णी,
सारं गता स्फटिकरोचितभालकान्ता ॥४॥

## मल्लिजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

श्रीमल्लिनाथ ! शमथद्रुमसेकपाथः,
कान्तप्रियङ्गुरुचिरोचितकायतेजः ।
पादाब्जमस्तु मदनार्त्तिमथो विमुक्ता—
कान्त ! प्रियं गुरु चिरोचितकाय तेऽज ! ॥१॥

स्याद्वादिनां ननिरनन्यजमिन्दुकान्ता—
च्छा या विडम्बयति सन्तमसङ्गमानाम् ।
सा मेऽवधिः प्रविधुनोतु कृतप्रकाश—
च्छायाविडम्बयति सन्तमसं गमानाम् ॥२॥

सङ्कोचमानयति या गृहमस्तमोहा—
नायाऽक्षमानममनामरसं स्तवानाम् ।

वाक्चन्द्ररग् द्यतु तमोभरमर्हताम—
नायासमानममतामरसंस्तवानाम् ॥३॥

श्रीजैनशासनहिता निखिलाहितालो—
सभिन्नतामरसभा सुरभासमाना ।
देवी दुनोतु दुरित धरणप्रिया वः,
सभिन्नतामरसभासुरभा समाना ॥४॥

## मुनिसुव्रतजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

सीमन्तिनीमिव पतिः समगस्त सिद्धि,
निम य विस्मितमहामुनि सुव्रतत्वम् ।
सोऽयं मम प्रतनुतात् तनुता भवस्य,
निर्माय ! विस्मितमहा मुनिसुव्रत ! त्वम् ॥१॥

दीक्षा जवेन जगृहुर्जिनपा विमुच्य,
कान्तारस गतिपराजितराजहसाः ।
ते मे सृजन्तु सुषमां यशसा सुकीर्त्ति—
का तारसङ्गतिपरा जितराजहसाः ॥२॥

दुर्दान्तवादिकुमतत्रिपुराभिघाते,
कामारिमानम मतं पृथु लक्षणेन ।
सर्वज्ञशीतरुचिना रचितं निरस्त—
कामारिमानममत पृथुलक्षणेन ॥३॥

या दुर्वियामकृत दुष्कृतकर्ममुक्ताऽ—
नालीकभञ्जनपराऽस्तमरालवाला ।

गत्याऽऽस्यमस्यतु तमस्तव गौर्यवन्ती,
नालीकभं जन ! परास्तमरालवाला ॥४॥

## नमिजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

देवेन्द्रवृन्दपरिसेवित ! सत्त्वदत्त—
सत्यागमो मदनमेघमहानिलाभः ।
मथ्नासि नाथ ! रतिनाथसरूपरूपः,
सत्यागमोऽमद ! नमे ! ऽघमहानिलाभः ॥१॥

पापप्रवृत्तिषु पराणि निवर्तयन्त्य—
सत्यासु खानि शिवसङ्गमनाददाना ।
जैनेन्द्रपङ्क्तिरुपयातु मदीयचित्ते,
सत्या सुखानि शिवसङ्गमना ददाना ॥२॥

यूथ ममन्थ हरिरैभमिवाधिमस्त—
मायामहारिमदनं दितदानवारि ।
जैनं मत विजयतां तदिद गमाना—
मायामहारि मदनन्दितदानवारि ॥३॥

या काल्यकिञ्चनजनानतनोदिताऽब्ज,
प्रत्यर्थिनो विशदमानगदाऽक्षमाला ।
सा देवता प्रथयतु प्रथितप्रभावा,
प्रत्यर्थिनो विशदमानगदाक्षमाला ॥४॥

## नेमिजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

यो रैवताख्यगिरिमूर्ध्नि तपांसि भोग—
राजीमतीत्य जनमारचयां चकार ।
नेमिं जना ! नमत यो विगतान्तरारी,
राजीमतीत्यजनमारचयाञ्चकार ॥१॥
यज्ज्ञानसारमुकुरे प्रतिबिम्बमीयु—
भ.वालयो गणनया रहिता निशाते ।
मेधाविनां स भगवन् ! परमेष्ठिनां श्री—
भावालयो गण ! नयाऽऽरहितानि शाते ॥२॥
निर्मापयन्त्यखिलदेहजुषां निषेधं,
सारा विभाति समतापर ! मारणस्य ।
सिद्धान्त ! सिद्धरचितस्य तवोग्रतत्त्व—
सारा विभाऽतिसमतापरमारणस्य ॥३॥
प्राप्ता प्रकाशमसमद्युतिभिर्निरस्त—
ताराविभावसुमतोदमहारिबन्धा ।
भक्ताऽम्बिकाऽमरवशाऽवतु नेमिसार्व—
ताराविभावसुमतो दमहारिबन्धा ॥४॥

## पार्श्वजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

श्रीपार्श्वयक्षपतिना परिसेव्यमान—
पार्श्वे भवामितरसादरलाङ्गलाभे ।

इन्दीवरेऽलिरिव रागमना विनीले,
पार्श्वे भवामि तरसा दरलाङ्गलाभे ॥१॥

श्यामासुधाकरसुवर्णवरेन्द्रनील—
राजीवराजिततराङ्गधराऽतिधीर ।
श्रेयःश्रिय सृजतु वो जिनकुञ्जराणा,
राजी वराऽजितपराऽङ्ग धरातिधीरा ॥२॥

या स्तूयते स्म जिनवाग् गहनार्थसार्थ—
राज्याऽऽयता मघवता समया तमोहाम् ।
दूरस्थिवां स्मृतिपथं कुरु मुक्तिपुर्या—
राज्याय तामघवतां समयातमोहाम् ॥३॥

छायेव पूरुपमसेवत पार्श्वपाद—
पद्मावतीहितरसाजवनोपमाना ।
सा मे रजांसि हरतादिव गन्धवाहः,
पद्मावती हि तरसा जवनोऽपमाना ॥४॥

## महावीरजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

सिद्धार्थवंशभवनेऽस्तुत य सुराली,
हृद्या तमोहमकर ! ध्वजमानतारे ! ।
त्वां नौमि वीर ! विनयेन सुमेरुधीर,
हृद्यातमोहमकरध्वजमान ! तारे ॥१॥

यत्पादपद्ममभवत् पतता भवाब्धा—
वालम्बनं शमधरी कृतकामचक्रा ।

त्व जैनराजि ! सृज मञ्जुशिवद्रुमाणां,
बालं वन शमधरीकृतकामचक्रा ॥२॥

कादम्बिनीव शिखिनामतनोदपास्ता—
रामारमा मतिमतां तनुतामरीणाम् ।
जैनी नृणामियममर्त्यमणीव वाणी,
रामा रमामतिमता तनुतामरोगाम् ॥३॥

सम्यग्दृशां सुखकरी मदमत्तनील—
कण्ठीरवाऽसि ततनोदितसाक्षमाला ।
देव्यम्बिके ! शिवमिदं दिश पण्डिताना,
कण्ठोरवासिततनो ! ऽदितसा क्षमाला ।४॥



न्यायविशारद पू. महोपाध्यायश्रीयशोविजयजीप्रणीता—

यमकबद्ध ऐन्द्र—

# स्तुतिचतुर्विंशतिका

## आदिजिनस्तुतिः

(शार्दूलविक्रीडितवृत्तम्)

ऐन्द्रव्रातनतो यथार्थवचनः प्रध्वस्तदोषो जगत्,
सद्यो गीतमहोदयः शमवतां राज्याऽधिकाराजितः ।
आद्यस्तीर्थकृतां करोत्विह गुणश्रेणीर्दवव्राभिभूः,
सद्योगीतमहोदयः शमऽवतां राज्याऽधिका राजित. ॥१॥

उद्भूताप्रतिरोधबोधकलितत्रैलोक्यभावव्रजा—
स्तीर्थे शस्तरसा महोदितभयाऽक्रान्ताः सदाशापदम् ।
घ्नन्तु स्मरनिर्जयप्रसृमरप्रौढप्रतापप्रथा—
स्तीर्थेशस्तरसा महोदितभयाः कान्ताः सदाशापदम् ॥२॥

जैनेन्द्रं स्मरतातिविस्तरनयं निर्माय मिथ्यादृशाम्,
सङ्गत्यागमऽभङ्गमानसहितं हृद्यऽप्रभाः विश्रुतम् ।
मिथ्यात्वं हरदूर्जितं शुचिकथं पूर्णं पदान्तं मिथः,
सङ्गत्या गमभङ्गमानसहित हृद्यऽप्रभावि श्रुतम् ॥३॥

या जाड्यं हरते स्मृताऽपि भगवत्यऽम्भोरुहे विस्फुरत्,
सौभाग्या श्रयता हिता निदधती पुण्यप्रभाविक्रमौ ।
वाग्देवी वितनोतु वो जिनमतं प्रोल्लासयन्ती सदाऽ—
सौ भाग्याश्रयतां हितानि दधती पुण्यप्रभावि क्रमौ ॥४॥

## अजितजिनस्तुतिः

(पुष्पिताग्रावृत्तम्)

मुनिततिरपि यं न रुद्धमोहा,
शमजितमारमद भवन्दिताऽऽपत् ।
भज तमिह जयन्तमाऽऽप्तुमीशं,
शमऽजितमाऽऽरमऽदम्भवन् ! दितापत् ॥ १॥

नियतमुपगता भवे लभन्ते,
परमतमोहर ! यं भयाऽनिदानम् ।
हर रुचिर ! ददज्जिनौघ ! तं द्राक्,
परमतमोहरय भयानि दानम् ॥ २ ॥

नयगहनमऽतिस्फुटानुयोगं
जिनमतमुद्यतमानसा ! धुतारम् ।
जननभयजिहासया निरस्ताऽऽ-
जि नमत मुद्यतमानसाधुतारम् ॥ ३ ॥

पविमपि दधतीह यानसीन्द्रै-
र्महितमऽदम्भवतां महाधिकारम् ।
दलयतु निवहे सुराङ्गनाना-
मऽहितमदं भवतां महाधिकाऽरम् ॥ ४ ॥

## शम्भवजिनस्तुतिः

(आर्यागीतिवृत्तम्)

शम्भव ! सुखं ददत् त्वं, भाविनि भावारवारवारण ! विश्वम् ।
वासवसमूहमहिताऽ-भाविनिभाऽवाऽरवारवाऽरण । विश्वम् ॥ १ ॥

यद्धर्मं शं भविनां सन्ततमुदितोदितोऽदितोदारकरः ।
स जयतु सार्वगणः शुचि-सन्ततमुदितोऽदितोऽदारकरः ॥ २ ॥

जैनी गीः सा जयता-न्न यया शमिताभिता भिताक्षररुच्या ।
किं सन्तः समवतर-न्नयया शमितामितामिनाक्षररुच्या ॥ ३ ॥

दलयतु काञ्चनकान्ति—र्जनतामहिता हिता हि ताराऽऽगमदा ।
इह वज्रशृङ्खला दु-र्जनतामहिताहिताहिताऽरागमदा ॥ ४ ॥

## अभिनन्दनजिनस्तुतिः

(द्रुतविलम्बितवृत्तम्)

त्वमभिनन्दन ! दिव्यगिरा निरा—
कृतमभाजनसाध्वस ! हारिभिः ।
अहृतधैर्य ! गुणैर्जय गर्जितः,
कृतसभाजन ! साध्वमहारिभिः ॥ १ ॥

भगवतां जननस्य जयन्निहाऽऽ-
शु भवतां तनुतां परमुत्करः ।
त्रिजगतीदुरितोपशमे पटुः,
शुभवतां तनुतां परमुत्करः ॥ २ ॥

त्रिदिवमिच्छति यश्चतुरः स्फुरत्,
सुरसनूहमऽस्य मतमर्हताम् ।
स्मरतु चारु ददत् पतमुच्चकैः,
सुरसमूहमयं मतमर्हताम् ॥ ३ ॥

धृतमकाण्डधनुर्द्यु तु तेजसा,
न रहिता सदया रुचराजिता ।
मदहृतानि परैरिह रोहिणी,
नरहिता सदया रुचिराऽजिता ॥ ४ ॥

## सुमतिजिनस्तुतिः

(आर्यागीतिवृत्तम्)

नम नमदमरसदम'स-सुमति सुमतिं सदसदरमुदारमुदा ।
जनिताजनितापदपद-विभव विभवं नर ! नरकान्तं कान्तम् ॥ १ ॥

भवभवभयदा भयदां-बली बलीयोदयोदयाऽमायामा ।
दद्यादऽद्याऽमितमित-शमा समादिष्टदिष्टबीजाऽबीजा ॥ २ ॥

दमदमऽसुगम सुगमं, सदा सदानन्दन दयाविद्याविद् ।
परमऽपरमऽस्मर ! स्मर, महामहा धीरधी रसमय समयम् ॥ ३ ॥

काली कालीरऽसरस भावाभावाय नयनसुखदाऽसुखदा ।
महिमहितनुता तनुता-दिताऽदितामानमानरुच्या रुच्या ॥ ४ ॥

## पद्मप्रभजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

पद्मप्रभेश ! तव यस्य रुचिर्मते सद्-
विश्वासमानसदयापर ! भाति तस्य ।
नोच्चैः पदं किमु पचेलिमपुण्यसम्पद्
विश्वासमान ! सदयाऽपर ! भावितस्य ॥ १ ॥
मूर्तिः शमस्य दधति किमु या पटूनि
पुण्यानि काचन सभासु रराज नव्या ।
सा स्तूयतां भगवतां विततिः स्वभक्त्या,
पुण्याऽनिकाचन ! सभा सुरराजनव्या ॥ २ ॥
लिप्सुः पदं परिगतैस्त्रिनयेन जैनी
वाचं यमैः सततमञ्चतु रोचितार्थाम् ।

ुद्रितकुतीर्थ्यनयावतारां,
वाचयमैः सततमं चतुरोचितार्थाम् ॥ ३ ॥
नत्र तनुषे शिवसाधने याऽ–
पाता मुदा रसमयस्य निरन्तराये ! ।
: ! वज्रमुशले जगती तवाऽस्याः,
पातामुदारसमयस्य निरन्तराये ! ॥ ४ ॥

## सुपार्श्वजिनस्तुतिः

(मालिनीवृत्तम्)

नन ! सुपार्श्व ! त्वं निरस्ताकृतक्ष्मा—
वनमद ! सुरबाऽधा हृद्यशोभाऽवतारम् ।
ातमजस्रं कैर्बुधैर्गीयते नाऽ—
वनमदसुर ! बाधाहृद् ! यशो भावतारम् ॥ १ ॥
शिवमुख ये कान्तिभिर्भासयन्तोऽ—
दुरितमदरतापध्यानकान्ताः सदाऽऽशाः ।
वृषभास्ते नाशयन्तु प्रवृद्धं,
दुरितमऽदरतापध्यानकान्ताः सदाशाः ॥ २ ॥
ारपठद् यं वर्जयन्ती हतोद्य—
त्तमसमऽहितदाऽत्रासाऽऽधिमाऽऽनंन्दितारम् ।
ाह भजाऽऽप्तेनोक्तमुच्चैर्दधानं,
तमऽसम ! हितदात्रा साधिमानं दितारम् ॥ ३ ॥
ःरिणि याता साऽर्हतां प्रौढभक्त्या,
मुदितमकलितापाया महामानसी माम् ।
ुधि निहत्याऽनीकचक्रं रिपूणा—
मुदितमकलितापा या महामानसीमाम् ॥ ४ ॥

## चन्द्रप्रभजिनस्तुतिः

(मन्दाक्रान्तावृत्तम्)

तुभ्यं चन्द्रप्रभ ! भवभयाद् रक्षते लेखलेखा-
नन्तव्या-पापमदमहते ! सन् ! नमोऽर्हासमाय ! ।
श्रेयः श्रेणी भृशमऽसुमता तन्वते ऽत्रस्तकामा-
नन्तव्यापाऽपमद ! महते सन्नमोहाऽसमाय ॥१॥

श्रेयो दत्ता चरणविलुठन्नम्रभूपालभूयो-
मुक्तामालाऽसमदमहिता बोधिदानाऽमऽहीना ।
मोहापोहादुदितपरमज्योतिषा कृत्स्नदोषै-
र्मुक्तामालाऽसमदमहिता बोऽधिदानाऽऽमहीना ॥२॥

रगद्भूग. स्फुटनयमयस्तीर्थनाथेन चूला-
मालापीनः शमदमवताऽसगतोपायहृद्यः ।
सिद्धान्तोऽय भवतु गदित श्रेयये भक्तिभाजा-
माऽलापी नः शमदनवता सगतोऽपायहृद्यः ॥३॥

सा त्वां वज्राङ्कुशि ! जय मुनौ भूरिभक्तिः सुप्रसिद्ध-
प्राणायामे शुचि मतिमताऽपाऽऽपदन्ताऽबलानाम् ।
दत्ते वज्राङ्कुशभृदऽनिश दर्पहन्त्री प्रदत्त-
प्राणा या मे शुचिमतिमता पापदन्ताबलानाम् ॥४॥

## सुविधिजिनस्तुतिः

(उपजातिवृत्तम्)

यस्याऽतनोद् देवततिर्महं सु-प्रभाऽवतारे शुचिमन्दरागे ।
इहाऽस्तु भक्तिः सुविधौ दृढा मे, प्रभावतारेऽशुचि मन्दरागे ॥१॥

अभूत् प्रकृष्टोपशमेषु येषु, न मोहसेना जनितापदेभ्यः ।
वृषभमभ्यमाऽऽप्ताः ! प्रथितोदयेभ्यो, नमोऽर्हसेना ! जनितापदेभ्यः ॥२॥

वाणीं रहस्य दधती प्रदत्त-महोदयाऽवद्भिरनीतिहारि ।
जीयाज्जिनेन्द्रैर्गदिता त्रिलोकी-महो ! दयावद्भिरनीति हारी ॥३॥

ज्वालोज्ज्वलोविद्रुमकान्तकान्तिः, करोऽतुलाभ शमऽदम्भवत्याः ।
ददन्नताना ज्वलनायुधे ! नः, करोतु लाभ शमदं भवत्याः ॥४॥

## शीतलजिनस्तुतिः

(द्रुतविलम्बितवृत्तम्)

जयति शीतलतीर्थपतिर्जने, वसु मती तरणाय महोदधौ ।
ददति यत्र भवे चरणग्रहे, वसुमतीतरणाय महो दधौ ॥१॥

वितर शासनभक्तिमतां जिना-वलि ! तमोहरणे ! सुरसम्पदम् ।
अधरयच्छिवनाम महात्मनां, वलितमोहरणे ! सुरस पदम् ॥२॥

भगवताऽभ्युदित विनमाऽऽगम, जन ! यतः परमापदमाऽऽदरात् ।
इह निहत्य शिव जगदुन्नति, जनयतः परमाऽऽप दमादरात् ॥३॥

स्तवरवैस्त्रिदशैस्तव सन्तत, न परमऽच्छविमानविलासिता ।
न घनशस्त्रकलाऽप्यरिदारिणी, न परमच्छवि ! मानवि ! लासिता ॥४॥

## श्रेयांसजिनस्तुतिः

(हरिणीवृत्तम्)

जिनवर ! भजन् श्रेयांस स्यां व्रताम्बुहृतोदय-
द्रवदव ! नतोऽह तापातङ्कमुक्त ! महागम ! ।

गतभववनभ्रान्तिश्रान्तिः फलेग्रहिरुल्लस-
द्भुवदवनतो हन्ताऽपात कमुक्तमहागम ! ॥१॥

जिनसमुदय विश्वाधार हरन्तमिहाङ्गिना,
भवमऽदरद रुच्या कान्त महामितमोहरम् ।

विनयमधिक कार कार कुलादिविशिष्टता-
भवमदरद रुच्याऽकान्त महामि तमोहरम् ॥२॥

शुचिगमपदो भङ्गैः पूर्णो हरन् कुमतापहोऽ-
नवगतमऽलोभावस्थामाऽऽश्रयन्नऽयशोऽभितः ।

जन ! तव मनो यायाच्छायामयः समयो गल-
न्नवरतमलो भावस्थामाश्रय नयशोभितः ॥३॥

मुकुतपटुना विघ्नोच्छित्त्या तवारिङतिक्षमाऽ-
पविफलकरा द्युत्याऽगेहाऽऽघनावनराजिता ।

वितरतु महाकाली घण्टाक्षसन्ततिविस्फुरत्,
पविफलकरा द्युत्यागेहा घनाघनराजिता ॥४॥

## वासुपूज्यजिनस्तुतिः

(स्रग्धरावृत्तम्)

पद्मोल्लासे पटुत्व दधदधिकरुचिर्वासुपूज्योऽर्कतुल्यो,
लोकं सद्धीरपातागमरुचिरपवित्रासहारिप्रभाऽव ।
लुम्पन् स्वैर्गोविलासैर्जगति घनतमो दुर्नयध्वस्ततत्त्वा-
लाक सद्धीर ! पात शमरुचिरपवित्रास ! हारिप्रभाव ! ॥१॥

लोकानां पूरयन्ती सपदि भगवतां जन्मसङ्गे गतिर्मे,
हृद्या राजी वनेऽत्रा भवनुदऽमरसार्थानिताऽप तमोहा ।

माक्षात् किं कल्पवल्लिर्विबुधपरिगता क्रोधमानार्त्तिमाया-
हृद्या राजीवनेत्रा भवतु दमरसाऽर्थिननापा तमोहा ।२॥

उत्तुङ्गस्त्वय्यभङ्गः प्रथयति सुकृत न्त्रारुपीयूषपानाऽऽ-
स्वादे शस्तादराऽतिक्षतशुचि सदनेकान्त ! सिद्धान्तराग. ।
रंगद्भंगप्रसंगोल्लसदममनये निर्मितानंगभंग-
स्वादेश ! स्तादऽगातिक्षतशुचिसदने कान्तसिद्धान्त ! राग: ॥३॥

वाग्देवि ! प्रीणयन्ती पटुविविधनयोन्नीतशास्त्रार्थनिष्ठा-
शङ्कान्ते ! देहि नव्येरितरणकुशले ! सुभ्रुवा देवि ! शिष्टम् ।
श्रद्धाभाजां प्रसाद सुमतिकुमुदिनीचन्द्रकान्ते ! प्रपूर्णाऽऽ-
शं कान्ते ! देहिनव्येऽरितरणकुशले ! सुभ्रु ! वाऽऽ विशिष्टम् ॥४॥

## विमलजिनस्तुतिः

(पृथ्वीवृत्तम्)

नमो हतरणायतेऽसमदमाय ! पुण्याशया,
सभाजित ! विभासुरैर्विमलविश्वमारक्षते ! ।
न मोहतरणाय ते समदमाय ! पुण्याशया-
सभाजितविभासुरैर्विमलविश्वमारक्षते ॥१॥

महाय तरसाहिताऽजगति बोधिदानामहो !,
दया भवतुदां तताऽसकलहाऽसमानाऽऽभया ।
महायतरसाहिता जगति वोऽधिदाना महो !,
दया भवतु दान्तताऽसकलहासमानाऽभया ॥२॥

क्रिय द ,रम ऽनन्तरागततया चितं वैभवं,
मतं समुदितं सदा शमवताऽभवेनोदितम् ।
क्रिय दरम ऽनन्तरागततयाचितं वैभव,
मत समुदितं सदाशमऽवता भवेऽनोदितम् ॥३॥
प्रभा वितरतादऽरं सुरभियाऽतता रोहिणी–
हिताशुगुरु चाऽपराजितकराशमारोचिता ।
प्रभावितरतादरं सुरभियाततारोहिणी,
हिताऽऽशु गुरुचापराजितकरा शमाऽऽरोचिता ॥४॥

## अनन्तजिनस्तुतिः

(द्रुतविलम्बितवृत्तम्)

कलितमोदमऽनन्तरसाश्रये शिवपदे स्थितमऽस्तभवापदम् ।
त्रिदशपूज्यमनन्तजित जिनं, कलितमोदमन तरसाऽऽश्रये ॥१॥
जिनवरा गततापदरोचिता, प्रददतां पदवी मम शाश्वतीम् ।
दुरितहृद्वचना न कदाचनाऽऽ-जिनवरागततापदरोचिताम् ॥२॥
सुरसमानसदक्ष रहस्य ! ते, मधुरिमाऽऽगम ! सोऽस्तु शिवाय नः ।
जगति येन सुधाऽपि घनप्रभा-सुरसमानसंदक्षर ! हस्यते ॥३॥
सदसिरऽक्षति भासुरवाजिन, जगदिता फलकेषुधनुर्धरा ।
जयति येयमिह प्राणताऽच्युता, सदसिरक्षतिभा सुरवा जिनम् ॥४॥

## धर्मजिनस्तुतिः

(अनुष्टुप्वृत्तम्)

श्रीधर्म ! तव कर्मद्रु-वारणस्य सदायते ! ।
स्तवं कर्तुं कृतद्वेषि-वारणस्य सदा यते ॥१॥

गिरा त्रिजगदुद्धारं, भाऽसमाना ततान या ।
श्रिया जीयाज्जिनाली सा, भासमानाऽततानया ॥२॥

वचः पापहरं दत्त-सात केवलिनोदितम् ।
भवे त्राणाय गहने सातङ्केऽवलिनोदितम् ॥३॥

दद्युः प्रसादाः प्रज्ञप्त्याः, शक्तिमऽस्त्याजितादराः ।
तस्या यया द्विषां सर्वे, शक्तिमत्या जिता दराः ॥४॥

## शान्तिजिनस्तुतिः

(शार्दूलविक्रीडितवृत्तम्)

अस्याभूद् व्रतघाति नातिरुचिरं यच्छ्रेयसे सेवना-
दक्षोद भरतस्य वैभवमयं साराजितं तन्वतः ।
लिप्सो ! शान्तिजिनस्य शासनरुचिं सौख्य जयद् ब्रह्म भोः !,
दक्षोऽदम्भरतस्य वै भवमयं साराजितं तन्वऽतः ॥१॥

येषां चेतसि निर्मले शमवतां मोक्षाध्वनो दीपिका,
प्रज्ञालाभवतां क्रिया सुरुचिताऽर भावनाभोगतः ।
ते श्रीमज्जिनपुंगवा हतभया नित्यं विरक्ताः सुखं,
प्रज्ञाला भवतां क्रियासुरुचितारम्भावना भोगतः ॥२॥

मिथ्यादृष्टिमतं यतो ध्रुवमभूत् प्रध्वस्तदोषात् क्षिता-
वाचारोचितमानमारयमदम्भावारिताऽपाप ! हे ! ।
तं सिद्धान्तमभगभंगकलितं श्रद्धाय चित्ते निजे,
वीक्ष्य रोचित ! मानमारयमदं भावारितापापहे ॥३॥

शत्रूणां घनधैर्यनिर्जितभया त्वां शासनस्वामिनी,
पातादानतमानवासुरहिता रुच्या सुमुद्राजिषु ।
श्रीशान्तिक्रमयुग्मसेवनरता नित्य हृतव्यग्रता–
पातादानतमा नवासु रहिताऽरुच्या सुमुद्राऽऽजिषु ॥४॥

## कुन्थुजिनस्तुतिः

(मालिनीवृत्तम्)

स जयति जिनकुन्थुर्लोभसक्षोभहीनो,
महति सुरमणीना वैभवे सन्निधाने ।
इ. भवति विना य मानसं हन्त केषा–
महति सुरमणीनां वै भवे सन्निधाने ॥१॥
जयति जिनततिः सा विश्वमाधातुमीशाऽ–
मदयतिमहिताऽर किन्नरीणामपाशम् ।
विलसितमपि यस्या हन्त नैव स्म चित्तं,
मदयति महिताऽर किन्नरीणामपाशम् ॥२॥
अवतु गदितमाप्तैस्त्वा मत जन्मसिन्धौ,
परमतरणहेतुच्छायया भासमानैः ।
विविधनयसमूहस्थानसगत्यपास्ता—
परमतरण ! हेऽतुच्छायया भाऽसमानैः ॥३॥
कलितमदनलीलाऽधिष्ठिता चारु कान्तात्,
सदसिरुचितमाराद् धाम हन्तापकारम् ।
हरतु पुरुषदत्ता तन्वती शर्म पुंसा,
सदसि रुचितमाऽऽराद्धाऽमह तापकारम् ॥४॥

## अरजिनस्तुतिः

(द्विपदीवृत्तम्)

हरन्त संस्तवीम्यहं त्वामरजिन ! सतत भवोद्भवा –
मानमदसु 'सार्थवाचम ! दम्भरताधिपापदम् ।
विगणितचक्रवर्तिवैभवमुद्दापराक्रमं हता–
मानमद ! सुरसार्थवाचं यमदं भरताधिपाऽऽपदम् ॥१॥
भीमभवं हरन्तमपगतमदकोपाटोपमर्हतां,
स्मरतरणाधिकारमुदितापदमुद्यमविरतमुत्करम् ।
भक्तिनताखिलसुरमौलिस्थितरत्नरुचाऽरुणक्रम,
स्मरत रणाधिकारमुदितापदमुद्यमविरतमुत्करम् ॥२॥
भीमभवोदधेर्नु वनमेव यतो विधुशुभ्रमञ्जसाऽ—
भवदऽवतो यशोऽभितरणेन न मादित न नयमित हि तम् ।
जिनगममयमनन्तभग जन ! दर्शनशुद्धचेतसा,
भवदवतोय ! शोभित ! रणेन नमादितं न यमितं हितम् ॥३॥
चक्रधग करालपरघातबलिष्ठमधिष्ठिता प्रभा—
सुरविनताततनुभवपृष्ठमनुदितापदरं गतारवाक् ।
दलयतु दुष्कृतं जिनवरागमभक्तिभृतामनारत,
सुरविनता तनुभवपृष्ठमनु दितापदरङ्गतारवाक् ॥४॥

## मल्लिजिनस्तुतिः

(रुचिरावृत्तम्)

मह्रोदय प्रवितनु मल्लिनाथ ! मेऽ-घनाघ ! नोदितपरमोहमान ! स. ।
अभूर्महाव्रतघनकानने सु यो, घनाघनोऽदितपरमोहमानसः ॥१॥

मुनीश्वरैः स्मृत ! कुरु सौख्यमर्हतां, सदा नतामर ! समुदाय! शोभितः ।
घनैर्गुणैगति विशेषयन् श्रिया, सदानतामरस !मुदा यशोऽभितः ॥ २ ॥

जिनः स्म य पठितमनेकयोगिभि-र्मुदा रसं गतमपरागमाऽऽह तम् ।
सदागमं शिवसुखदं स्तुवेतरा-मुदारसङ्गतमऽपरागमाहतम् ॥ ३ ॥

तनोतु गीः समयरुचिं सतामनाविला सभा गविक्कृतधीरतापदा ।
शुचिद्युतिः पटुरणदच्छकच्छपी, विलासभागऽविकृतधीरतापदा ॥ ४॥

## मुनिसुव्रतजिनस्तुतिः

(नर्दटकवृत्तम्)

तव मुनिसुव्रत ! क्रमयुग ननु कः प्रतिभा—
वनघन । रोहितं नमति मानितमोहरणम् ।
नतसुरमौलिरत्नविभया विनयेन विभ—
वनघ ! नरो हित न मतिमानितमोहरणम् ॥१॥

अवति जगन्ति याऽऽशु भवतो मयि पारगता—
वलि ! तरसेहितानि सुरवा रसभाजि तया ।
दिशतु गिरा निरस्तमदना रमणीहसिता—
वलितरसे ! हितानि सुरवारसभाजितया ॥२॥

यतिभिरधीतमार्हतमत नयवज्रहताऽ—
घनगमऽभंगमाऽऽनमरणैरनुयोगभृतम् ।
अतिहितहेतुना दधदपास्तभव रहित,
घनगमऽभ गमाऽऽनम रणैरनु योगभृतम् ॥३॥

वितरतु वाञ्छित कनकरुग् भुवि गौर्ययशो—
हृदिततमा महाशुभविनोदिविमानवताम् ।

या मायामानहर्त्री भवविभवविदां दत्तविश्वासविश्वा-
नाप्तानाप्ताभिशङ्का विमदविमदनत्रासमोहाऽनमोहा ॥२॥
गौरागौरातिकीर्तेः परमपरमतह्रासविश्वासविश्वाऽऽ-
देया देयान्मुदं मे जनितजनितनूभावतारावतारा।
लोकालोकार्थवेत्तुर्नयविनयविधिव्यासमानासमानाऽ—
भङ्गा भंगानुयोगासुगममुगमयुक् प्राकृतालङ्कृताऽलम् ॥३॥
लोके लोकेशनुत्या सुरसमुरसभां रञ्जयन्ती जयन्ती,
व्यूहं व्यूहं रिपूणां जनभजनभवद्गौरवा मारवामा।
कान्ताऽकान्ताऽहिपस्येरितदुरितदुरिन्ताहितानां हितानां,
दद्याद्द्यालिमुच्चैरुचितरुचितमा सस्तवे च स्तवे च ॥४॥

## वर्धमानजिनस्तुतिः

(दण्डकवृत्तम्)

तव जिनवर ! तस्य बद्ध्वा रतिं योगमार्ग भजेयं महावीर !
पाथोधिगम्भीर ! धीरानिशं,
मुदित ! विभव ! सन्निधानेऽसमोहस्य सिद्धार्थनाम !
क्षमाभृत् ! कुमारापहे यस्य वाचा रतः।
मुनिजननिकरश्चरित्रे पवित्रे परिक्षीणकर्मा स्फुरज्ज्ञानभाक्
सिद्धशर्माणि लेभेतरा—
मुदितविभवसन्निधानेऽसमोहस्य सिद्धार्थनामक्षमाभृत्कुमारा—
ऽपहेयस्य वाऽऽचारतः ॥१॥
नयकमलविकासने का सुरी विस्मयस्मेरनेत्राऽजनि प्रौढ—
भामण्डलस्य क्षतध्वान्त ! हे !,

न तत्र रविभया समानस्य रुच्याऽङ्गहाराहितेऽपारिजात—
स्य भास्वन् ! महे लास्यभारोचिते ।
कनकरजतरत्नसालत्रये देशनां तन्वतो ध्वस्तसंसार !
तीर्थेशवार ! द्यु सद्धोरणी—
नत ! वर ! विभयासमानस्य रुच्याङ्गहारा हिते पारिजातस्य
भास्वन्महेलास्यभारोचिते ॥२॥

वचनमुचितमर्हतः सश्रय श्रेयसे प्रीणयद् भव्य ! भीमे दधद्
ध्वस्ततापं भवाम्भोनिधौ,
परमतरणहेतुलाभ गुरावाऽऽर्यमानन्दिताऽपायशो भावतो
भासमानस्य माराजितम् ।
दलितजगदसद्ग्रह हेतुदृष्टान्तनिष्पिष्टसन्देहसन्दोहमद्रोह !
निर्मोह ! निःशेषिता—
परमतरण ! हेऽतुलाभङ्गुरावार्यमानं दितापाय ! शोभावतो
भासमानस्य माराजितम् ॥३॥

अहमहमिकया समाराद्धमुत्कण्ठितायाः क्षणे वाङ्मय—
स्वामिनी शक्तिमह नाय दद्यात्तरां,
सकलकलशता रमाराजिता 'पापहाने कलाभा स्थिताऽ—
सद्विपक्षेऽमरालेरवार्यागमम् ।
दधतमिह सत्तां दिशन्ती सदैङ्कारविस्फारसारस्वत—
ध्यानदृष्टा स्वय मङ्गल तन्वती,
सकलकलशतारमाराजितापापहाऽनेकलाभास्थिता
सद्विपक्षे मराले रवार्यागमम् ॥४॥



रिपुमदनाशिनी विलसितेन मुदं ददती,
हृदि ततमाऽऽमहाऽऽशु भविनो दिवि मानवताम् ॥४॥

## नमिजिनस्तुतिः

(शिखरिणीवृत्तम्)

यतो यान्ति क्षिप्र नमिरघवने नाऽत्र तनुते,
विभावर्यो नाश कमऽनलसमाऽऽनन्दितमऽदः ।
दधद् भासांचक्र रविकरसमूहादिव महा —
विभावर्योऽनाशङ्कमऽनलसमान दितमदः ॥१।
भवोद्भूत भिन्द्याद् भुवि भवभृतां भव्यमहिता,
जिनानामाऽऽयास चरणमुदिताऽऽली करचितम् ।
शरण्यानां पुण्या त्रिभुवनहितानामुपचिताऽऽ—
जिनानामायास चरणमुदितालीकरचितम् ॥२॥
जिनानां सिद्धान्तश्चरणपटु कुर्यान्मम मनोऽ —
पराभूतिर्लोके शभहितपदानामऽविरतम् ।
यतः स्याच्चक्रित्वत्रिदशविभुताद्या भवभृतां,
परा भूतिर्लोकेश भहितपदानामविरतम् ॥३॥
गजव्यालव्याघ्रानलजलसमिद्बन्धनरुजोऽ—
गदाक्षाऽऽलीकालीनयमवति विश्वासमहिता ।
जनैर्विश्वध्येया विघटयतु देवी करलसद् —
गदाक्षाली काली नयमऽवति विश्वाऽऽसमहिता ॥४॥

## नेमिजिनस्तुतिः

(शार्दूलविक्रीडितवृत्तम्)

त्वं येनाक्षतधीरिमा गुणनिधिः प्रेम्णा वितन्वन् सदा,
नेमेऽकान्तमहामना विलसतां राजीमतीरागतः ।

कुर्यास्तस्य शिव शिवाङ्गज ! भवाम्भोधौ न सौभाग्यभाग्,
नेमे ! कान्तमहामऽनाविल ! सतां राजीमतीरागतः ॥१॥

जीयासुर्जिनपुङ्गवा जयति ते राज्यर्द्धिषु प्रोल्लस-
द्वामातेकपराजितासु विभयासन्नाभिरामोदिताः ।
योधालीभिरुदित्वरा न गणिता यैः स्फातयः प्रस्फुर-
द्वामानेकपराजितासु विभया सन्नाभिरामोदिताः ॥ २॥

या गङ्गेव जनस्य पङ्कमखिलं पूता हरत्यञ्जसा,
भारत्याऽऽगमसङ्गता नयतताऽमायाचिता साऽधुना ।
अध्येतुं गुरुसन्निधौ मतिमता कर्तुं सतां जन्मभी-
भारत्यागमऽसङ्गता न यततामाऽऽयाचिता साधुना ॥३॥

व्याम स्फारविमानतूरनिनदैः श्रीनेमिभक्तं जन,
प्रत्यक्षामरसालपादपरतां वाचालयन्ती हितम् ।
दध्यान्नित्यमिताऽऽम्रलुम्बिलतिकाविभ्राजिहस्ताऽहितं,
प्रत्यक्षामरसालपादपरताऽम्बा चालयन्तीहितम् ॥४॥

## पार्श्वजिनस्तुतिः

(स्रग्धरावृत्तम्)

सौधे सौधे रसे स्त्रे रुचिररुचिरया हारिलेखारिलेखा,
पायं पाय निरस्ताघनयघनयशो यस्य नाथस्य नाऽथ ।
पार्श्वं पार्श्वं तमोद्रौ तमऽहतमहमऽक्षाभजाल भजाऽलं,
कामं कामं जयन्त मधुरमधुरमाभाजनत्व जन ! त्वम् ॥१॥

तीर्थे तीर्थेशराजी भवतु भवतुदऽस्तारिभीमारिभीमा-
लीकालीकालकूटाऽकलितकलितयोल्लासमूहे समूहे ।

या मायामानहर्त्री भवविभवविदां दत्तविश्वासविश्वा-
नाप्तानाप्ताभिशङ्का विमदविमदनत्रासमोहाऽनमोहा ॥२॥
गौरागौरातिकीर्तेः परमपरमतह्रासविश्वासविश्वाऽऽ-
देया देयान्मुदं मे जनितजनितनूभावतारावतारा ।
लोकालोकार्थवेत्तुर्नयविनयविधिव्यासमानासमानाऽ—
भङ्गा भगानुयोगासुगममुगमयुक् प्राकृतालङ्कृताऽलम् ॥३॥
लोके लोकेशनुत्या सुरसमुरसभां रञ्जयन्ती जयन्ती,
व्यूह व्यूह रिपूणां जनभजनभवद्गौरवा मारवामा ।
कान्ताऽकान्ताऽहिपस्येरितदुरितदुरिन्ताहिताना हितानां,
दद्य दद्यालमुच्चैरुचितरुचितमा सस्तवे च स्तवे च ॥४॥

## वर्धमानजिनस्तुतिः

(दण्डकवृत्तम्)

तव जिनवर ! तस्य वद्ध्वा रतिं योगमार्गं भजेयं महावीर !
पाथोधिगम्भीर ! धीरानिशं,
मुदित ! विभव ! सन्निधानेऽसमोहस्य सिद्धार्थनाम !
क्षमाभृत् ! कुमारापहे यस्य वाचा रतः ।
मुनिजननिकरश्चरित्रे पवित्रे परिक्षीणकर्मा स्फुरज्ज्ञानभाक्
सिद्धशर्माणि लेभेतरा—
मुदितविभवसन्निधानेऽसमोहस्य सिद्धार्थनामक्षमाभृत्कुमारा—
ऽपहेयस्य वाऽऽचारतः ॥१॥
नयकमलविकासने का सुरी विस्मयस्मेरनेत्राऽजनि प्रौढ—
भामण्डलस्य क्षततध्वान्त ! हे !,

न तव रविभया समानस्य रुच्याऽङ्गहाराहितेऽपारिजात—
स्य भास्वन् ! महे लास्यभारोचिते ।
कनकरजतरत्नसालत्रये देशनां तन्वतो ध्वस्तसंसार !
तीर्थेशवार ! द्यु सद्धोरणी—
नत ! वर ! विभयासमानस्य रुच्याङ्गहारा हिते पारिजातस्य
भास्वन्महेलास्यभारोचिते ॥२॥

वचनमुचितमर्हतः सश्रय श्रेयसे प्रीणयद् भव्य ! भीमे दधद्
ध्वस्ततापं भवाम्भोनिधौ,
परमतरणहेतुलाभ गुरावाऽऽर्यमानन्दिताऽपायशो भावतो
भासमानस्य माराजितम् ।
दलितजगदसद्ग्रह हेतुदृष्टान्तनिष्पिष्टसन्देहसन्दोहमद्रोह !
निर्मोह ! निःशेषिता—
परमतरण ! हेऽतुलाभङ्गुरावार्यमानन्दितापाय ! शोभावतो
भासमानस्य माराजितम् ॥३॥

अहमहमिकया समाराद्धुमुत्कण्ठतायाः क्षणे वाङ्मय—
स्वामिनी शक्तिमहनाय दद्यात्तरां,
सकलकलशता रमाराजिता पापहाने कलाभा स्थिताऽ—
सद्विपक्षेऽमरालेरवार्यागमम् ।
दधतमिह सत्तां दिशन्ती सदैङ्कारविस्फारसारस्वत—
ध्यानहृष्टा स्वय मङ्गल तन्वती,
सकलकलशतारमाराजितापापहाऽनेकलाभास्थिता
सद्विपक्षे मराले रवार्यागमम् ॥४॥



जैनरत्न व्या. वा. पू. आ. श्रीमद्विजयलब्धिसूरीश्वरप्रणीत

# स्तुतिचतुर्विंशतिका

## आदिजिनस्तुतिः

(शार्दूलविक्रीडितवृत्तम्)

सम्यक्त्वाब्जविकासभास्कर ! विभो ! कर्मद्रुमोन्मूलने,
मत्तेभोरुपराक्रम ! द्युतिनिधे ! नाभेय ! मुक्तिप्रद ! ।
संसारानलदह्यमानजनतातापापहे वारिद !,
त्वन्नामस्मरणेन मङ्गलमहान्[1]नूत्नान् सदाऽऽवाप्नुमः ॥१॥

ते नो दद्युरनारत जिनवराः सत्संवरं निर्जराम्,
मुक्तिं चात्मशमप्रदां जनिमृतिप्रध्वंसिकीं शाश्वतीम् ।
ये साध्यैकपरायणाः परहिता लोकैकपूज्यप्रभाः,
लोकाग्रैकपदस्थिता अपि जगद्व्याप्ता भवोत्तारकाः ॥२॥

ज्ञानं नेत्रमनुत्तमं नरभवे प्राप्नोति यत्पूर्णताम्,
मिथ्यादिक्षयजातदर्शनयुताच्चारित्रसंसर्गतः ।
नूनं तज्जिनशासने मतिमतां पुण्योदयात्प्राणिनाम्,
लोकालोकसमस्तवस्तुविषयं प्रोज्जृम्भते सिद्धिदम् ॥३॥

श्रीनाभेयपदाब्जसेवनपरा चक्रेश्वरी देवता,
विख्याता जिनशासने भयहराऽधिष्ठायिकाऽऽनन्ददा ।
चञ्चद्दिव्यविभाप्रकाशकतनूश्चरक्रं वहन्ती करे,
दैत्यव्रातबलप्रभञ्जनचणा जीयाज्जगत्यां सदा ॥४॥

---

१ महोत्सवान् ।

# अजितजिनस्तुतिः

(द्रुतविलम्बितवृत्तम्)

अजितनाथ ! तवाङ्घ्रिसरोरुहं, विविधशक्तमरन्दकरम्बितम् ।
नरसुरासुरकिन्नरसेवितं, मम मनोऽलिरहर्निशमिच्छति ॥१॥

जिनवरा जगतामघनाशना, मम हृदि प्रतिवासितशासनाः ।
सकलतत्त्वविकासनविश्रुता, ददतु शाश्वतसौख्यमहोदयम् ॥२॥

विमलकारकबुद्धिमहोदयं, विनतभावुकवृन्दमहोदयम् ।
यतिवरैर्हतरोषमुखैस्सदा, हृदि विभावितमस्त्वभयाय नः ॥३॥

जिनपदाब्जरता सुभगाऽजिता भुवनभीतिगणोपशमे हिता ।
अरिजनैरजिता जनवन्दिता, जयतु तीर्थपशासनदेवता ॥४॥

# शम्भवजिनस्तुतिः

(उपजातिवृत्तम्)

भवाम्बुराशिब्रुडितान् जनान् यो, ररक्ष सत्त्वप्रतिपालदक्षः ।
खगेशचिह्नाङ्कितसक्थिदेश त शम्भभ तोर्थपति नमामि ॥१॥

विध्वस्तरा ादिगणा महान्तो, दयासरिज्जन्मनिदानभूताः ।
समस्तजीवार्चितपादपद्मा, पुनन्तु मार्वज्ञमहर्द्धयो न. ॥२॥

प्रभोवचोऽनन्ततमःप्रहारि, सत्तत्त्वरत्नप्रतिभासदक्षम् ।
गतिभ्रमिक्लान्तजनावलम्ब जीजाज्जगच्छान्तिसुधाप्रवर्षि ॥३॥

आज्ञारता श्रीदुरितारिदेवी, हन्त्री प्रभोश्शामनविघ्नकर्तॄन् ।
देवादिभि. सेवितपादपद्मा, जय त्रिदश्याज्जिनशासनस्य ॥४॥

## अभिनन्दनजिनस्तुतिः

(द्रुतविलम्बितवृत्तम्)

जयतु सवरभूपतिनन्दनः, परमशैत्यपराजितचन्दनः ।
कमलकान्तविशालविलोचनो, मतिमतां सुखदाय्यभिनन्दनः ॥१॥

अमितबोधसुधारससागरो, भगवतां निकरः करुणाकरः ।
निजमहोहतनैकदिवाकरो, भवतु भाविकभावतमोहरः ॥२॥

विविधवादमणिव्रजरञ्जितो, वितततत्त्वतरङ्गतरङ्गितः
नयमितिव्रजमीनमनोहरो, जयतु तीर्थपशासनसागरः ॥३॥

शरशरासनशोभिकराम्बुजा, नयनयोः सुखदाऽसुखनाशिनी ।
श्रुतविलोपिशठवज्रभीकरा भवतु विघ्नहरा मम कालिका ॥४॥

## सुमतिजिनस्तुतिः

(वसन्ततिलकावृत्तम्)

यो दुःखवारिधिनिमग्नशरीरिवृन्दं,
रत्नत्रयातुलगुणार्पणतो जुगोप ।
पूर्णेन्दुसुन्दरशुचिस्मितवक्त्रपद्मः,
पायादपायनिकारात्सुमतिप्रभुः स. ॥१॥

विघ्नाहितोपशमकृत् तनुतां जनानां
दुष्पाकदुःखविसरस्य भृशं क्षयित्वम् ।
आनन्दपङ्कजसुगन्धितकान्तमूर्तिः,
तीर्थेशपङ्क्तिरनिशं विदधातु सौख्यम् ॥२॥

नालं निमग्नजनता भवपारमाप्तुं,
नालं स्वकीयभवदाहशमं विनेतुम्।
नालं सुरासुरनरर्द्धिशिवञ्च लब्धुं,
यस्माद् ऋते जयतु तच्छ्रुतरत्नमत्र ॥३॥

निष्टप्तकाञ्चनलसत्तनुकान्तिरम्यात्,
पद्मासना वरदपाशकसव्यहस्ता।
नागाङ्कुशाकलितवामकरा प्रधाना,
काली महादिरनिशं जिनराजभक्ता ॥४॥

## पद्मप्रभजिनस्तुतिः

(इन्द्रवंशावृत्तम्)

पद्मप्रभो रक्तपयोजलोहितो ज्ञानादिना ध्वस्तभवार्त्तिसञ्चयः।
निःशेषविज्ञानभरात्तमोऽपहो, लोकं पुनीतां गुणरत्नराजितः ॥१॥
ज्ञानेन शुक्लेन मनोज्ञवृत्तयो, धर्मप्रकाशैकनिदानभूमयः।
तीर्थङ्करा नैकभवार्जितं तमः, घ्नन्ति विश्वस्य हितैकदीक्षिताः ॥२॥
पथ्यप्रदं तीर्थपतिप्रकाशितं सिद्धान्तमृद्धार्त्तिविनाशकारणम्।
आराध्य नानानयबोधशालिनो, भव्याः समर्थाः कुमतान्निरासितुम् ॥३॥
श्यामाभमूर्त्तिच्छविरच्युता मुनौ, भक्त्यातिनम्रा वरदेपुयुक्करा।
अम्भोजनेत्राऽभयकार्मुकाञ्चिता, जाड्यं निहन्तु स्मृतमात्रतो जवात् ॥४॥

## सुपार्श्वजिनस्तुतिः

(रुचिरावृत्तम्)

सुपार्श्वस्तीर्थेशः कृतनिखिलकर्मापनयनो,
नरामर्त्याधीशैर्नुतगुणगरिष्ठोऽतिकरुणः।

जगत्तत्त्वव्रातप्रकटनपटुज्ञानमहितो
जयेन्नानाभाषापरिणतवचोवैभवधरः ॥१॥

जिनानां श्रेणीयं भवभयहरा शान्तिनिलया,
सुरेन्द्रैःसम्पूज्योज्ज्वलतरयशोराजिरुचिरा ।
दयाधारावर्षिण्यनुपमशमाध्वप्रकटिनी
क्रियाश्रद्धासिद्धा वितरतु जिहासोर्भवभयम् ॥२॥

तृतीय यन्नेत्र सकलनयभावप्रकटने,
जिनैर्गीतं जीवाभयमयशमप्राप्तिनिलयम् ।
विशुद्धं चारित्रं सहकृतिवशाद्यस्य शुशुभे,
सदा तद्विज्ञानं जयतु भविचेतोऽब्जतरणिः ॥३॥

गजारूढा शान्ता कनकनिभगौरा भयहरा,
चतुर्हस्ता ध्वस्ताखिलखलजना शासनवरा ।
सुपार्श्वान्तर्ध्यात्री भविकशिशुधात्री शशिमुखी,
सदा पायादक्षाभयवरदशूलाञ्चितकरा ॥४॥

## चन्द्रप्रभजिनस्तुतिः

(आख्यानकोवृत्तम्)

चन्द्रप्रभोऽमर्त्यनरप्रणम्यो, निरस्तकन्दर्पमदो विमायः ।
भृशं जनानां तनुतेऽभयं यो, जयत्वजस्रं स जिनो जगत्याम् ॥१॥

बोधिप्रदश्रेणिरहीनभद्रा, सुनिर्मलज्ञानसरित्पतिर्या ।
सुनिर्जिता-शेषरिपुप्रभावा, समेधतां साऽखिलधीगरिष्ठा ॥२॥

मिथ्यातमःखण्डनभास्कराभं, समुन्नतानन्दविधानदक्षम् ।

भवाब्धिसन्तारणयानपात्रं, ददातु सौख्यं वचनं जिनानाम् ॥३॥
ज्वाला समुद्दीप्रसुवर्णजाला, वरालकाकल्पितवाहना या ।
जिनेन्द्रपादाम्बुजभूरिभक्ता, तनोतु सा शासनगौरवं द्राक् ॥४॥

## सुविधिजिनस्तुतिः

(मालिनीवृत्तम्)

जिनपतिसुविधिर्मे तेजसाऽपारदीप्रो,
कुविषयविनिपातान्नित्यनीचाध्यगानाम् ।
परमसुखनिदानं प्राणिनामूर्च्चिवान्यो,
हृदि स लसतु नित्यं पूतचारित्ररम्य ॥१॥
जिनपतिनिकरोऽसौ नाशिताशेषदोषः,
पदकमलविलुण्ठन्नम्रदेवेन्द्रमौलिः ।
महदुपकृतिकारी वस्तुतत्त्वप्रबोधात्,
जयतु जगति सारः साधिताशेषसारः ॥२॥
वृजिनतिमिरनाशे पद्मिनीप्राणनाथो,
भवभयदवतापे पुष्करावर्त्त मेघः ।
कुमतिमतगजानामङ्कुशो ज्ञानमत्र,
प्रभवतु भविभ्योवद्धे पितापापहन्तृ ॥३॥
रिपुसमरसुधीरा गौरवर्णं सुतारा,
सुविधिचरणरक्ता शासने दत्तचित्ता ।
बहुजनबहुमान्या खण्डिताशेषविघ्ना,
जगति जयतु नित्यं गेयसम्यक्त्वरम्या ॥४॥

## शीतलजिनस्तुतिः

(हरिणीप्लुतावृत्तम्)

हृतभवदरं लोकाधारं भवार्त्यपनोदनात्,
भृशमसुमतां श्रेयःश्रेणीप्रदं भवतु पदम् ।
प्रसृमरयशोराशि प्रज्ञाप्रभाऽऽकरशीतलं,
वहति हृदये ध्यायन् भव्य आस्य पदं जिनशीतलम् ॥१॥
नयतु जिनपश्रेणिः श्रेयो नरामरवन्दिता,
विमलचरणानन्दोदन्वत्तरङ्गतरङ्गिता ।
अतिहितदयास्रोतःसृष्टिङ्करा भविमानवे,
जगति विषयध्वान्ताक्रान्ते सुतीर्थविधायिनी ॥२॥
वदति समयो भावव्रातान् जिनेश्वरनिर्मितो,
नयगुणतया प्राधान्येनाविपर्ययरूपतः ।
स भवतु महामोहोच्छित्यै सुचारुविचारितो,
बहुनयगमैर्भङ्गैर्मानैः सदा परमोदयः ॥३॥
सजलजलदश्यामा पद्मासना नरवन्दिता,
जिनवरपदं भक्त्या याता फलाङ्कुशयुक्करा ।
श्रुतिरिपुगणान् हत्वा युद्धे जयेन मदाकुला,
वरदसहिताऽशोका पाशाञ्चिताऽवतु शासनम् ॥४॥

## श्रेयांसजिनस्तुतिः

(प्रहर्षिणीवृत्तम्)

श्रेयांसः परिहृतकामलोभलक्ष्मीः, आराध्यव्रतवरमाप्तसर्वबोधः ।
जीवानामभयदसत्त्वरक्षणस्य, व्याख्याताऽवतु सुरनाथवन्दिताङ्घ्रिः ॥१॥

लोकानामभिलषित प्रपूरयन्ती, मोहार्त्तं भ्रमितलभीकरे भवाब्धौ ।
कन्दर्पप्रभृतितिमिङ्गिलार्दितस्य, गजिर्मे भवतु गतिद्रु तं जिनानाम् ॥२॥

वाणी मे मगधगिरा निबद्धरम्या, विश्वस्यामलमतिदा सुरेन्द्रपूज्या ।
स्याद्वादामृतरसवर्षिणो पवित्री-भूयाद्धीनिकरविनाशने समर्था ॥३॥

श्रीवत्सा रिपुभयदा श्रुताधिदेवी, स्वर्णाभा करिरिपुवाहना मनोज्ञा ।
इष्टार्थं वितरतु मां जनाभिवन्द्या, तीर्थेशाऽनवरतभक्तिभावपूर्णा ॥४॥

## वासुपूज्यजिनस्तुतिः

(मन्दाक्रान्तावृत्तम्)

पद्मोल्लासे दिनकरनिभो वासुपूज्यो जिनेन्द्रः,
तत्त्वालोक कुमतितिमिरैर्नाशित दुर्नयैर्यः ।
ध्वान्त गाढं सुनयकिरणैर्मूलतः संप्रहृत्य,
प्रोद्दध्रे त सुरनरनुतं भावतः संस्तवीमि ॥१॥

घात्युच्छेदादुपगतमहादीप्तकैवल्यरम्या,
सच्चारित्रोदकभरहृतोद्दीप्रससारदावा ।
रागद्वेषं घनतरतमोव्याप्तिकृज्ज्ञानहारि,
तीर्थेशालिर्दहतु जगति भ्रान्तिबीजं जनानाम् ॥२॥

तत्त्वातत्त्वप्रकटनपटुः प्राणिनामेकचक्षुः,
चूलामालाकलित उपमाहीनतामादधानः ।
आप्ताख्यातो हरतु सततं तैमिरं दुःखमुग्रं,
सिद्धान्तो नः परमपदवीकामिनां शान्तिदायी ॥३॥

देवी चण्डा जिनपतिमते प्रोल्लसन्ती जगत्या,
विघ्नव्रातं शमदमवतां सङ्गतं छेदयन्ती ।
तीर्थेशानां हृदयकमले भक्तिमुद्रा दधाना,
साहाय्यं मे वितरतु सदा धर्मकार्यप्रवृत्ती ॥४॥

# विमलजिनस्तुतिः

(वंशस्थवृत्तम्)

सुरेशवन्द्यं विमलं जिनेश्वरं, कलाप्रधानं नतसौख्यदायिनम् ।
मुखाम्बुजाग्रास्तशरत्कालानिधिं, भजे भुजङ्गाभभवार्त्तिमुक्तये ॥१॥
नरामरैर्गीतपवित्रकीर्त्तयो, जिनेश्वरा भव्यहृदब्जसंश्रयाः ।
हितामृतोद्धर्पणतः शमङ्करा, जयन्तु लोकस्य सदा जयङ्कराः ॥२॥
समस्ततत्त्वप्रकरप्रभासकं, नयप्रमाणैः कुमतप्रणाशकम् ।
यनित्रजोत्तारकरत्नदीपकं, नमामि नित्यं जिनराजभाषितम् ॥३॥
जिनेन्द्रचित्ता विजया कजासना, सदा रतोपासककार्यसाधने ।
शरासपाशाङ्कुशनागहस्तका, जयत्वजस्रं भविविघ्नहारिणी ॥४॥

# अनन्तजिनस्तुतिः

(पञ्चचामरवृत्तम्)

अनन्तनाथमीश्वरं जिनं जगत्प्रकाशकं,
निजाननेन्दुमण्डलान्निरस्तयामिनीपतिम् ।
प्रभाकराधिकप्रभं दयासरित्प्रवाहकं,
व्रतादिरत्नरोहणं स्तवीमि भक्तिभावतः ॥१॥
जिनव्रजस्तमोहरो हृतत्रितापसुन्दरो,
जनेष्टकल्पपादपः सुरार्चिताङ्घ्रिपङ्कजः ।
अनन्यवस्तुतत्त्वराजिबोधदः सुखाकरः,
सदा सुखं शिवार्थिनां ददातु दिव्यनायकः ॥२॥
यतः कुदृष्टिसम्मतं क्षितौ हृतप्रभं श्रुतं,
स्मरादिभाववैरिणः क्रियामुखाच्च खण्डिताः ।

जिनेन्द्रवक्त्रपङ्कजाद्विनिःसृतं श्रुतं परं,
भवार्दितास्तदुज्ज्वलं विचिन्त्यतां मनोगृहे ॥३॥
सुवर्णगौरसुन्दरी कजासना महोज्ज्वला,
कृपाणपाशपट्टकाङ्कुशैर्विशोभिहस्तका।
जिनोक्तधर्मकर्मविघ्नकारिणां भयङ्करां,
मुदाऽङ्कुशा सहायतां तनोतु भव्यवाञ्छिते ॥४॥

## धर्मजिनस्तुतिः

(शालिनीवृत्तम्)

विज्ञानाब्धिर्लोकगेयोरुकीर्त्ति–र्घातिध्वंसात्पूततेजस्विमूर्तिः।
भव्यश्रेणेर्दत्तपीयूषशान्तिः, श्रीधर्मोऽसौ रातु मे शुद्धदान्तिम् ॥१॥
तीर्थेशालिर्भावनाऽऽभोगभूमि–स्तीर्णाऽन्येषां तारिका दुःखसिन्धोः।
चित्ते ध्येया देवमर्त्त्येन्द्रगेया, पायात् पापान्मां सदा भक्तिनम्रम् ॥२॥
योगादगम्यं शाश्वतं धामदायि: माधुर्यं तत्तीर्थनाथस्य वाक्यम्।
विश्वे यस्माद्धस्यते वै सुधापि, कल्याणाय स्यात्सदा मे पिपासोः ॥३॥
भीमा दुष्टप्राणिनामार्त्तिदानां, कान्ता शान्तिप्रेमिशिष्टाग्रणीनाम्।
स्वान्ते ध्यात्री पादपद्मं जिनानां, प्रज्ञप्तिर्नः कार्यसिद्धिं विदध्यात् ॥४॥

## शान्तिजिनस्तुतिः

(शिखरिणीवृत्तम्)

सदा भव्यैर्वन्द्यो जगति विमलख्यातिमहिमा
क्षणाच्चक्रेशत्वं निखिलनिधिराशीन् परिहरन्।
तथा सत्प्राणित्रातं शिवसुखपदप्राप्तिभवनं,
ललौ सच्चारित्रं जयतु मृगलक्ष्मा शमिपतिः ॥१॥

भवाब्धेर्निस्तारे प्रवहणनिभाः शान्तिनिलयाः,
अनेकैर्देवेशैर्नतपदकजा धर्मशरणाः ।
स्फुरत्कान्तिव्रातैर्विजितमिहिरा ज्ञाननिधयो,
जिनाः सर्वे शुद्धस्फटिकमणिभूमिं प्रददतु ॥२॥

महामोहध्वान्तव्रजविघटनादित्यसदृश,
गुणैः पूर्णं नित्यं भवजलनिधेस्तारणपरम् ।
यतीनां सम्पत्तिं दददुपशमाख्यां सुविमलां,
अनन्तं विज्ञानं वितरतु सदा बुद्धिविभवम् ॥३॥

शुभा या निर्वाणी जिनपतिपदाभ्यर्चनरता,
महाप्रत्यूहानां परिहरणदक्षाऽतिसुखदा ।
स्फुरत्कान्ताभूषा विमलवसनालङ्कृततनू-
रजस्रं सा भूयात् कनककमनीयाम्बुजकरा ॥४॥

## कुन्थुजिनस्तुतिः

(मञ्जुभाषिणीवृत्तम्)

अयि ! शर्मणीश! मयि प्रीयतां दयां, भवतापभीतिहर! कुन्थुनाथ!भो! ।
त्वदृते निजात्मज इवाशु कः परः, सुखमुत्तमं वितरितुं प्रभुर्भुवि ॥१॥

प्रथमानसुन्दरगुणव्रजा ! जिनाः !, मणिमालिकानिभगुणाः सुधोपमाः ।
भवता भवार्त्तिभयभाजिनां भवेत्, शिवपूर्गमाय सरणिर्निरर्गला ॥२॥

जिनपाननाम्बुजविनिर्गतं वचो, भविनां श्रवस्सुखकरं तमोहरम् ।
सुरनिम्नगास्मयविधूननं परं, भवतु क्षितौ मतिमतां शुभङ्करम् ॥३॥

कनकच्छविर्जिनपादाब्जमानसा, शिखिवाहना भयकरी दुरात्मनाम् ।
प्रभुपादपद्ममकरन्दपायिनां, शमदा बला भवतु विघ्नहारिणी ॥४॥

# अरजिनस्तुतिः

(चञ्चरीकावलीवृत्तम्)

पवित्र साधूनां मानसक्षीरजातं,
गृहं यस्य ख्यातं यस्य पूजा महार्घ्या।
पद चेतस्कान्तं यच्छति प्राणभाग्भ्यो,
भजे त तीर्थेशं लोकराजारनाथम् ॥१॥
भयायातप्राणि–रक्षण यत्कृपालो–
रुपैति प्राज्यं त तीर्थपाना समूहम्।
स्तुतिप्रज्ञाप्राज्ञैस्तूयमानोरुकीर्ति,
भजेऽहं पादाब्जे न्यस्तमूर्धा भवार्त्तः ॥२॥
भवाग्नेरम्भोद ! पापतामिस्रभानो !,
जगत्प्राणिस्तव्य ! स्वामिवक्त्राब्जजात !।
अनेकान्तख्यात ! कामवल्लीकुठार !,
अभङ्गो रागः स्तात् मे वचः ! त्वय्यजस्रम् ॥३॥
पयोजाध्यस्ता या नीलकान्त्या सुरम्या,
रिपुव्रातच्छेत्री शासनोद्दीप्तिकर्त्री।
सदा ध्वान्ते ध्यात्री धारिणी तीर्थनाथं,
वरेण्या सा नित्यं नाथसेवापरा स्तात् ॥४॥

# मल्लिजिनस्तुतिः

(वातोर्मिवृत्तम्)

मल्लि श्रीम न् हृदि भव्यैर्गृहीतो, हृत्वा ताप शिवशर्म-प्रदत्ते।
योऽमुं नाथ-मुविःचित्रत्नदेह, सेवे- नित्य निजसशुद्धायेऽहम् ॥१॥

साधुव्रातैः स्मृत ! लोकैकपूज्य !, त्यागज्ञानाऽऽहृतलोकाग्रभूमे ! ।
तीर्थेशानां व्रज ! दीने दयालो !, विश्वे सौख्य कुरु कीर्तिवितन्वत् ॥२॥
योगिश्रेष्ठैः पठितं तीर्थपोक्तं, भङ्गैर्मानैरनुयोग दधानम् ।
ज्ञानं ज्येष्ठ भवजाले कुठार, भित्त्वा मोहं विरति मे प्रदद्यात् ॥३॥
वैरूट्या या महिना जीवत्रर्गं, कृष्णद्योतिनलिने संनिषण्णा ।
शत्रुव्रातस्मयनाश विधात्रो, भव्यैरिष्टा जयदा सा प्रकामम् ॥४॥

## मुनिसुव्रतजिनस्तुतिः

(इन्द्रवज्रावृत्तम्)

श्रीसुव्रतो नाथितलोकनाथः, प्रज्ञाटवीवर्द्धनवारिवाहः ।
दानानुकम्पादमनिम्नगेशो, ध्यान विश ल विदधातु तूर्णम् ॥१॥
तीर्थेशवारो भवसार्थवाहः, श्रद्धालुधीगाथित आप्तवर्यः ।
विध्वस्तकामादिरिपुर्बलीयान्, निर्यामको मे द्यतु विघ्नजालम् ॥२॥
हीनः कलङ्केन कुतर्कराहो-र्ग्रस्ता सदा पूर्णकलो विचित्रः ।
ईशाननादुद्गतशासनेन्दुः, कि नो नयस्यः कृतिभिर्जगत्याम् ॥३॥
भद्रासना तप्तसुवर्णरोचिः, रक्षाकरी शासनभक्तिभाजाम् ।
रुच्या सुमुद्राऽऽजिषु पूर्णभाग्याऽ-क्षुप्ताऽवतात्तीर्थपपादरक्ता ॥४॥

## नमिजिनस्तुतिः

(मेघविस्फुर्जितावृत्तम्)

सतां शुद्धे चित्ते नमिजिनपतिर्मोक्षमार्गस्य धाता,
विभावर्यास्तेषां जडतिमिरजाया विभेत्ता यमीन्द्रः ।
मनोज्ञाङ्काचक्राङ्कवि परिलसन्मोहतामिस्रहर्ता,
क्रियाज्ञानेच्छूनां वितरतु सुख नाशहीनं नितान्तम् ॥१॥

यज्ञेया सद्गुणाऽगणितगुणराजैर्निदानं सुधीनां,
यदीयं विज्ञानं हरति सुदृढ गाढकर्मान्धकारम् ।
ततस्तीर्थेशानां सुरनरवरैः पूजिता शान्तभावैः,
विदध्यात्साऽजस्रं व्यपगतमयं शाश्वतं मोक्षमार्गम् ॥२॥

जिनादित्योद्योतः शिवपुरलसत्पङ्कजश्रीप्रबोधः,
कुदृष्टिध्वान्तौघैस्तिमिरितजगद्बोधको वाक्प्रवाहः ।
भवाम्भोधौ भीमे प्रवहणनिभो मोक्षसम्प्रापकत्वात्,
अशेषं कल्याणं वितरतु सदा नम्रभव्यात्मकेभ्यः ॥ ३ ॥

सदा सेव्या देवैः शशिवदवदाता रिपून्मूलकर्त्री,
जिनेशानां भक्ता शुचिगुणवहा लोकविश्वासपूज्या ।
चतुर्हस्ता शान्ता सरलहृदयानां भयव्रातहन्त्री,
सुभूषा गान्धारी हिततर्तिमरं सन्निधत्ता जगत्याम् ॥४॥

## नेमिजिनस्तुतिः

(उपेन्द्रवज्रावृत्तम्)

व्रतापगासागरनेमिनाथो, घनाघघासज्वलनः कृपालुः ।
शुभङ्करः पुण्यवतां जनानां, निहन्तु मे कर्मरिपून्नतस्य ॥१॥

जिनेन्द्रवर्गः प्रथितोरुभर्गः, कृतापवर्गः कृतबोधिसर्गः ।
सुमार्गविश्राणनदत्तचित्तः, चिदेकवित्तो जयताज्जगत्याम् ॥२॥

परागमाबाधितसङ्गतार्था, विकाशिताशेषपदार्थसार्था ।
रुचिं श्रुतस्यार्हतवाक् सदैव, तनोतु शुद्धां शमिनां हृदीद्धाम् ॥३॥

मनोहरार्चिहरिवाहनाऽम्बा, रसालवृक्षाभिरतिं दधाना ।
जिनेशभक्तेषु हितं प्रदात्री, श्रुतान्तरायान् हरतात्समुत्थान् ॥ ४ ॥

## पार्श्वजिनस्तुतिः

(इन्द्रवंशावृत्तम्)

योहन्त्यघानि स्मरतां मनीषिणां, येन न्यघानि प्रबलारिमन्मथः।
यस्योरुकीर्त्तिर्जगति प्रतिष्ठिता, पार्श्वप्रभुं तं प्रणमामि भावतः ॥१॥
ईशव्रजोऽपास्तसमस्तदूषणः, शास्ता जगत्या गुणरत्नभूषणः।
सत्त्वानुकम्पादमदानसागरः, कुर्यात्सदा मङ्गलमङ्गिनां वरः ॥२॥
नेत्रं वरं सर्वपदार्थबोधने ज्ञानं स्मृतं तीर्थपवक्त्रनिःसृतम्।
संसारपारङ्कर उत्तमः प्लवः, तन्मे विधत्तां विबुधैः स्तुतं सुखम् ॥३॥
पद्मावती काञ्चनकान्तिमञ्जुला, कर्कोटकाह्यासनगा मनोहरा।
तीर्थेशपादाम्बुजरक्तमानसा, विघ्नप्रभेत्री जयताज्जयावहा ॥४॥

## वर्धमानजिनस्तुतिः

(१)

(स्रग्धरावृत्तम्)

श्रीमद्वीरं भजन्तां जिनमनुदिवसं ध्वस्तमोहान्धकारं,
दातारं मोक्षलक्ष्म्या भवजलधितरिं भावतो भव्यजीवाः।
प्रोत्सर्पद्दुष्टकर्माष्टकहरिगरुडं प्राप्तमुक्तिं भवन्तः,
आनन्दस्यास्पदं तं गुणगणशरणं कौशिकैरञ्चितो यः ॥१॥
श्रीमत्तीर्थङ्कराणामिह जगति चतुर्विंशतिः पूर्णकामा,
संसारापारवार्धेर्भयनिकरभृतो यानपात्रं पवित्रम्।
मर्त्यामर्त्यासुरेन्द्रैर्नतपदकमला भव्यचेतोऽब्जभानुः,
भूयाद्भव्यात्मनां सा कुशलहितकरी मोक्षसौख्यस्य दात्री ॥२॥
श्रेयस्कृत् प्राणभाजां तिमिरभरहरं सेवितं सत्तमैर्यत्,
यस्मात्सत्त्वव्रजोऽगात् परमसुखचयं कर्मवृन्दं विजित्य।

पापध्वान्तोष्णरोचिः परमसुखकरं कर्मदन्तावले यत्,
पञ्चास्यस्योपमाभृज्जगति विजयते ज्ञानरत्नं सदा तत् ॥३॥

आत्मानन्दप्रदात्री जिनमुखकमलस्यालितां ता दधाना,
सम्यक्त्वे रक्तचित्ता सकलशशिमुखी नाशितातङ्कवारा ।
देवी सिद्धायिका सा भविकसुखकरी सर्वविघ्नौघहर्त्री,
तीर्थेशार्चोद्यमानां वितरतु भविनां सौख्यलब्धि गुणाढ्या ॥४॥

२-(शार्दूलविक्रीडितवृत्तम्)

योऽधादुन्नतिमार्गबीजमनघं जन्मात्ययध्वंसकं,
वेगेन प्रतरन्ति यस्य कृपया नावेव सिन्धुं भवम् ।
यस्मादाप्य गुणाकर भविजना मुक्ति पुर लेभिरे,
त पारीन्द्रसुलाञ्छितं विभुवरं वीर भजे तीर्थपम् ॥१॥

सर्वे तीर्थंकरा वरा भवहरा मार्गोपदेशान्मताः,
आत्मध्याननिरूपका गुरुतपः संतन्य संत्रायकाः ।
जाता भव्यजनस्य भावभयतो ये नेमिरे भावुकैः,
तानाऽऽनन्दमुनीश्वरैः प्रतिदिनं ध्यातान् स्तुवे सर्वदा ॥२॥

ज्ञानानन्दवरार्णवे भविजनः स्नात्वा श्रुते पावने,
सर्वज्ञैः कथिते गुणातिगहने सद्दृष्टिदेवार्चिते ।
लेभे मुक्तिमुखं नमामि सतत तं ह्यागम पारद,
सूरीशैः कमलाभिधैः गुणिवरैर्ध्यात परं भावतः ॥३॥

देवी विघ्नविनाशिका सुगुणभृत्सार्वे पदे या रता,
ध्याता धार्मिककायकृत् प्रतिदिनं सिद्धायिका सौख्यदा ।
सा देवार्चितपादपङ्कजवरा भक्तिभरा शासने,
लब्धेर्दानरता रताश्रुतपदे सूरेः प्रदेयात् सुखम् ॥४॥

कविचक्रवर्तिश्रीपालप्रणीता–यमकबद्ध–

# स्तुतिचतुर्विंशतिका

(अनुष्टुप्वृत्तम्)

भक्त्या सर्वजिनश्रेणि–रसंसारमहामया ।
स्तोतुमारभ्यते बद्ध–रस सारमहा मया ॥१॥
[इति मङ्गलश्लोकः]

श्रीनाभेय ! भवान् पुंसा–मलङ्कारमणीयते ।
अभूत् ते चित्तमाक्रष्टु–मलं का रमणी यते ! ॥२॥

समुलङ्घितसंसार–कान्तार ! तरसाऽजित ! ।
मां पुनीहि जगन्नाथ !, कान्तागतरसाजित ! ॥३॥

निरस्तः केन मोहस्त्वां, विनां शम्भव ! दारुणः ।
तेनाऽसि दहनीकर्तुं, विनाशं भवदारुणः ॥४॥

अभिनन्दन ! युष्मासु, सदाचरणधीरता ।
जेतुमेनांसि नान्येषां, सदा च रणधीरता ॥५॥

श्रीः पुंसां सुमते ! ध्वस्त–कलितापाय ! दक्षता ।
तद्भक्तेस्तत्र पापेषु, कलिताऽपायदक्षता ॥६॥

पद्मप्रभ ! सिषेवे त्वां, मुक्ताहारमुदारता[1] ।
त्वयि लोकत्रयी मुक्ति–मुक्ताहार ! मुदा रता ॥७॥

सुपार्श्व ! देशनायां ते, चतुराननकोमलाः ।
गिरः श्रुत्वा न तुष्टाव, चतुरानन ! कोऽमलाः ॥८॥

चन्द्रप्रभ ! भवानेव, सत्तम सप्रभावताम् ।
यो धत्ते चैव सञ्जेतुं, सत्तमः सप्रभावताम् ॥९॥

सुविधे ! कैवंचो मार्गं, विभवस्तव नीयताम् ।
त्वय्येव मन्यते स्वर्ग-विभवः स्तवनीयताम् ॥१०॥

त्वयि निर्वृतिदानाय, शीतले सविभावसौ ।
सिक्तोऽस्मि सकलक्लेश-शीतलेशविभावसौ ॥११॥

तं श्रेयांसं स्तुवे भक्त्या, कामं केवलिनामिनम् ।
यस्मादन्ये न गृह्णन्ति, काम के वलिनामिनम् ॥१२॥

वासुपूज्य ! विभो ! स्तौमि, भवन्तं सत्वराशयः ।
यत्प्रासादात् तरन्त्येव, भव त सत्वराशयः ॥१३॥

यं स्मृत्वाऽपि लभन्ते स्म, देहिनः सुरसम्पदम् ।
स त्वं विमल ! निर्दोषं, देहि नः सुरसं पदम् ॥१४॥

अनन्तजित् ! तव श्रेयः, सुतरामापदञ्चकः !
त्वामीश प्राप्य नावैति, सुतरामापदं च कः ! ॥१५॥

केषां नाभूच्चमत्कारो, धर्मराज ! सतामसौ ।
विकारौ यत् त्वया ध्वस्तौ, धर्म ! राजसतामसौ ॥१६॥

शान्तं यन्नागमो दोष-विकलं कतमो नयः ।
तद्वचस्ते स किं स्तौति, विकलङ्कतमो न यः ॥१७॥

तेजः कुन्थो ! भवोत्तार-करालम्ब ! तवारिभिः ।
कूर्च्चाग्नेरिव न ध्वस्तं, करालं बत वारिभिः ॥१८॥

अर ! त्वदुपमानस्य, विभवोदधिरेकदा ।
जनः तीर्णोऽखिलकर्म-विभवो दधिरेकदा ॥१९॥

मल्लिदेव ! दयारूप-ममानं ते नवं धनम् ।
त्वया कर्माख्यमुच्छेद्य-ममानं तेन बन्धनम् ॥२०॥

श्रीसुव्रत ! व्यधार्षीःस्म, महीनतरसं यमम् ।
अजैषीस्त्वं जनान्नन्तु-महीनतरसयमम् ॥२१॥

नमे ! यस्मिन्नतोऽस्मि त्वा-ममानं दमयोगतः ।
स एव समयः काम, ममाऽऽनन्दमयो गतः ॥२२॥

ताः समन्नाक्षिपन्नमे !, कमनीयतमा नवम् ।
यासां दृशाऽपि नानङ्ग-कमनीयता मानवम् ॥२३॥

पार्श्वनाथ ! जगाम त्वां, कोपमातङ्गतापदम् ।
यः पुपोप तपःसिह, कोऽपमातङ्गतापदम् ॥२४॥

जातलक्ष्मीं तमो हतु, वर्द्धमान ! प्रभो ! दयाम् ।
देहिमद्य विधेहि त्वं, वर्द्धमानप्रभोदयाम् ॥२५॥

[1]शुचिर्जिनाली वः पाया-दपवित्रा समानसा ।
योऽस्नाद्यस्यास्तमोग्गोसा(!), दपवित्रा समानसा ॥२६॥

जिनागम तमो ध्वसे, रविकल्पमपापदम् ।
नमाम्यममाकमले-रविकल्पमपापदम् ॥२७॥

त्वया वाग्देवि ! तत्कार्य-महतोद्यमयाऽऽदरात् ।
यथा मोहमयां तार्य-महतोद्यमयादरात् ॥२८॥

[अथ प्रशस्ति.]

इति सुमनम. श्रीपाल-कवि कृतनुतयः समस्तजिनपतयः ।
अविनाशिज्ञानदृशो, दिशन्तु वः सुविशुद्धमतयः.... .. .. ॥२९॥

---

१ एतद् प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिचतुर्विंशतिका भवति ।

पू. आ. श्रीधर्मघोषसूरीश्वरप्रणीता–यमकबद्ध–

# स्तुतिचतुर्विंशतिका

(मालिनीवृत्तम्)

जय वृषभजिनाऽभि-ष्टूयसे निम्ननाभि–
जंड़िमरविसनाभि-र्यः सुपर्वाङ्गनाभिः।
तम इह किल नाभि-क्षोणभृत्सूनुनाऽभि–
द्रुतभुवनमनाभि, क्षान्तिसम्पत्कुनाभिः ॥१॥

प्रकटितवृषरूप !, त्याक्तनिश्शेषरूप–
प्रभृतिविषयरूप !, ज्ञातविश्वस्वरूप !।
जय चिरम-ऽसरूप !, पापपङ्काऽम्बुरूप !।
त्वमजित ! निजरूप–प्रास्तसज्जातरूप ! ॥२॥

जय मदगजवारिः, शम्भवान्तर्भवाऽरि–
व्रजभिदिह तवाऽरि-श्रीर्न केनाप्यवारि।
यदधिकृतभवाऽरि–स्रंसन ! श्रीभवाऽरिः,
प्रशमशिखरिवारि, प्रोन्नमद्दानवारिः ॥३॥

अकृतशुभनिवारं, योऽत्र रागादिवारं,
सुविनतमघवाऽर, संवरोद्भूः सुवारम्।
मदनदहनवारं दोलिताऽन्तर्भवाऽऽरं,
नमत सपरिवारं, तं जिनं सर्ववारम् ॥४॥

---

१ सदृशः। २ हिंसितम्। * 'द्रागतिद्दानननाभिः' इत्यवचूर्याम्। ३ क्षमाश्रीनिधिः। ४सुवर्ण। ५ गजबन्धः। ६ धर्मचक्रश्रीः। ७ आविष्ट-लिङ्गत्वात् 'अनतो लुबि' (सि. है. १-४-५९) ति सिलोपः। ८ 'प्राणमद्दानवारिः' इत्यवचूर्याम्।

तव जिनसुमते !, न, प्रत्यहं तन्यते न,

स्तुतिरिति मुमते-न !, कृत्तमोनिष्कृते-न ! [1]

यदिह जगति तेन, द्राग् मया सम्मतेन,

ध्रुवमितदुरितेन, श्रीश ! भाव्य हितेन ॥५॥

परिहृततनृपपद्म !, श्रीजिनाधीशपद्म—

प्रभ ! सदरुणपद्म-द्युत् ! तपोहृसपद्म ! ।

त्वदखिलभविपद्म-व्रातसंबोधपद्म—

स्वजन ! गतविपद् म-ण्येतुशर्माऽङ्कपद्म ! [2][3] ॥६॥

दुरितमिभगमोऽहं. पूर्विकार्चक्रमोऽह—

न्त्यसमतमसमोऽह-ङ्कारजित् यः समोहम् ।

कृतकरणदमो ह-न्ताऽस्त लोभं नुमोऽहं—

मतिहृतम-समोहं, तं सुपार्श्वं तमोहम् ॥७॥

समतृणमणिभाव !, ज्ञाननिश्शेषभाव !,

प्रहतसकलभाव-प्रत्यनीकप्रभाव ! ।

कृतमदपरिभाव !, श्रीश ! चन्द्रप्रभाऽव,

द्विजपतितनुभाव !, त्यक्तकामस्वभाव ! ॥८॥

जिनपतिसुविधे ! यः, स्यात्त्वदाज्ञाविधेय—

प्रवणं इह विधेय, प्रस्फुरद्भागधेय ।

त्रिजगदनपिधेय-श्लाघसन्नामधेय !,

श्रयति शुभविधे ! य-स्तं लसद्रूपधेय ! ॥९॥

य इह निहतकाम, मुक्तराज्यादिकामं,

प्रणतसुर ! निकामं त्यक्तसद्भोगकामम् ।

---

१ इन !-सूर्य ! । २ पद्मस्वजन !-सूर्य ! । ३ एतु-आगच्छतु ।

नमति सनिजकामं, शीतल ! त्वां प्रकामं,
[1]श्रयतकि तमकामं, सार्विकाश्रीः स्वकामम् ॥१०॥

[2]विषमविशिखदोषा-चारिचारप्रदोषा,
प्रतिविधति सदोषाऽप्यस्य किं कालदोषा ।
य इह वदनदोषा-पाऽर्चिषाऽक्षालि दोषाऽ—
[3]तनुकमलमदोषा, श्रेयसा [4]शस्तदोषा ॥११॥

कृतकुमतप्रधानं, सत्त्वरक्षाऽविधानं,
विहितदमविधानं, सर्वलोकप्रधानम् ।
असमशमनिधानं, शं जिन संदधानं,
नमत सदुपधानं, वासुपूज्याऽभिधानम् ॥१२॥

भवदवजलवाहः, [5]कर्मकुम्भाद्यवाहः,
शिवपुरपथवाहः-स्त्यक्तलोकप्रवाहः ।
विमल ! जय सुबाहः सिद्धिकान्ताविवाहः,
शमितकरणवाहः, शान्ततृट्हव्यवाहः ॥१३॥

जिनवर ! विनयेन, श्रीश ! शुद्धाशयेन,
प्रवरतरनयेन, त्वं नतोऽनन्त ! येन ।
भविकमलचयेन, स्फूर्जदुर्जस्वयेन,
द्विरदगतिनयेन, तेन भाव्यं सयेन ॥१४॥

जडिमरविसधर्मा-न्मुक्तदानादिधर्म !
त्रुटितमदनधर्म !, न्यक्कृताऽप्राज्ञधर्म ! ।

---

१ त्यादिसर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक इत्यनेन श्रयतकि । २ कन्दर्पदैत्यस्य प्रकृष्टं चछलं यस्याम् । ३ उपचारात् विकाशं ऊषति इति विकाशोषा । ४ शस्तौ बाहू यस्य तेन । ५ अवाहः— पाकस्थानम् ।

जय जिनवरधर्म !, त्यक्तसंसारिधर्म[1] !,
प्रतिनिगदितधर्म–द्रव्यमुख्यार्थधर्म ! ।१५॥
यदि नियतमशान्ति, नेतुमिच्छोपशन्ति,
समभिलपत शान्ति[2], तद्विधाप्याप्तशान्तिम्[3] ।
प्रहृतजगदशान्ति, जन्मतोऽप्यात्तशान्ति,
नमत विनतशान्ति, हे जना ! देवशान्तिम् ॥१६॥
ननु सुरवरनाथ–त्वां न नाथे नृनाथ –
त्वमपि विगतनाथः, किन्त्वह कुन्थुनाथ ! ।
प्रकुरु जिन ! सनाथ, स्यां यथाऽघोपनाथ[4] ।
प्रणतविबुधनाथ !, प्राज्यसत्श्रीसनाथ ! ॥१७॥
अवगमसवितारं[5], विश्वविश्वेशितारं,
तनुरुचिजिततारं[6], सद्दयासान्द्रतारम्[8] ।
जिनमभिनमताऽरं, भव्यलोका ! [9]अतारं,
यदि पुनरवतारं, संसृतौ नेच्छताऽरम् ॥१८॥
अनिशमिह निशान्तं, प्राप्य यः सन्निशान्तं[10],
नमति शिवनिशान्तं[11], मल्लिनाथं प्रमान्तम् ।
अधिपमिह विशा तं, श्रीर्गता चाऽवशाऽन्तं[12],
श्रयति दुरितशान्तं, प्रोज्झ्य नित्यं वशाऽन्तम् ॥१९॥

---

१ संसारिजनाचारः ! । २ कल्याणम् । ३ अवाप्तमुक्तिम् । ४ दुःखमुपता-पयतीति । ५ विधातारम् । ६ 'रदरुचिजितसार' मिति अवचूर्याम् । ७ सुवर्णम् । ८ नयनमध्यकनीनिका । ९ वीतरागादन्यैस्तारयितुमशक्यम् । १० सुप्रभातम् । ११ कल्याण-भवनम् । १२ निकटम् ।

न्यदधत मघवा स, प्रोलसत्शुद्धवासः,[1]

परिहृतगृहवासस्यांऽसके यस्य वासः ।

विहितशिवनिवासः प्रत्तमोहप्रवासः,

स मन इह भवाऽसः, सुव्रतो मेऽप्युवास ॥२०॥

समनमयत[2] बालः, शात्रवान् योऽप्यबाल—

प्रकृतिरसितवालः, प्रास्तरुग्चक्रवालः ।

जयतु नमिरबालः, सोऽधरास्तप्रवालः,

श्वसितविजितबालः[3], पुण्यवल्लयालवालः ॥२१॥

जितमदन ! मुने–नाऽनिशं नाथ ! नेमे !,

निरुपमशमिनेमे[4] !, येन तुभ्य विनेमे ।

निकृतिजलधिनेमे[5], सीर ! मोहद्रु नेमे !,

प्रणिदधति न नेमे, त परा अप्यनेमे[6] ॥२२॥

अहिपतिवृतपार्श्वं, छिन्नसमोहपार्श्वं,[7]

दुरितहरणपार्श्वं[8] सन्नमद्यक्षपार्श्वम् ।

अशुभतम[9]उ पार्श्वं, न्यकृतास्मं सुपार्श्वं,

वृजिनविपिनपार्श्वं, श्रीजिनं नौमि पार्श्वम् ॥२३॥

त्रिदशविहितमानं, सप्तहस्ताऽङ्गमानं,

दलितमदनमानं, सद्गुणैर्वर्धमानम् ।

अनवरतममानं, क्रोधमत्यस्यमानं,[10]

जिनवरमसमान, सस्तुवे वर्धमानम् ॥२४॥

---

१ मनः । २ सम्यग् रमयामास । ३ ह्रीबेराख्य सुगन्धिद्रव्यम् । ४ कोटिः । ५ पृथ्व्याः । ६ सर्वे । ७ मायाम् । ८ उपायः । ९ ईश्वरः । १० अत्यर्थं क्षिपन्तम् ।

×जिन ! तव गुणकीर्त्ते[1], विश्वविघ्नस्तकीर्ते[2],
विगलदपरकीर्ते–र्यद्गिरा धर्मकीर्ते[3]: ।
सितकरसितकीर्ते:, शुद्धधर्मैककीर्ते[4]:,
स्तुतिमहमन्त्रिकीर्ते[5], तां कृताऽनङ्गकीर्ते[6]: ॥२५॥

*विगलितवृजिनानां, नौमि राजीं जिनानां,
सरसिजनयनानां, पूर्णचन्द्राननानाम् ।
गजवरगमनानां, वारिवाहस्वनानां,
हृतमदमदनानां, मुक्तजीवाऽऽसनानाम् ॥२६॥

अविकलकलतारा–प्राणनाथां[7]शुतारा,
भवजलनिधितारा, सर्वदाऽविप्रतारा ।
सुरनरविनता रा– त्वाऽऽर्हतीगीर्वताऽऽरा—
दनवरतमिताऽऽरा, ज्ञानलक्ष्मीं मुतारा ॥२७॥

नयनजितकुरङ्गी–कां सुधारो चिरङ्गी—
मिह किल मुहुरङ्गी, कृत्यचित्तान्तरङ्गी ।
स्मरति हि सुचिरं गी–र्देवतां यस्तरङ्गी,
कुरुत इममर गी—त्यादिकृतवन्धुरङ्गी: ॥२८॥

---

×इय च स्तुति: सर्वस्तुतीनामादौ पुस्तकेषु दृश्यते, परं अस्माभिरभिज्ञजनसम्मतेनाऽत्र लिखिता विवृता चेति अवचूरिकार: । १ विस्तारिते । २ ईर्ते–प्रसरति । ३ प्रासादस्य । ४ कीर्ति:–कथनम् । ५ विस्तारितवान् । ६ शोषिताऽनङ्गकर्दम: । *एतद् प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिचतुर्विंशतिका भवति । ७ ताराप्राणनाथ-चन्द्र ।

(अनुष्टुप्वृत्तम्)

जिनं यशःप्रतापास्त-पुष्पदन्तं समं ततः ।
संस्तुवे यत्क्रमौ मोहं. पुस्पदन्तं समन्ततः । ॥१॥
प्रातस्तेऽङ्घ्रिद्वयी येन, सरोजास्य ! समा नता ।
त्वयाऽस्तु जिनधर्माब्ज-सरोऽजाऽस्य ! समानता ॥२॥
वन्दे देव ! च्युनोत्पत्ति-व्रतकेवलनिर्वृतिम् ।
विश्वार्चित ! च्युतोत्पत्ति-व्रतके बलनिर्वृतिम् ॥३॥
चतुरास्यं चतुःकाय, चतुर्द्धा वृषसेवितम् ।
प्रगमामि जिनाधीशं, चतुर्धावृषसेऽवितम् ॥४॥
जिनेन्द्रानञ्जनश्याभात्, कल्याणाब्जहिमप्रभान् ।
चनुर्विशतिमानौम्य-कल्याणब्जहिमप्रभान् ॥५॥

[इति मङ्गलश्लोकाः]

विलोक्य विकचाम्भोज-काननं नाभिनन्दनम् ।
द्रष्टुमुत्कायते कोऽपि काननं नाभिनन्दनम् ॥६॥
भवानीश ! सदा यस्या-जित ! नाथति ।
अहितो न हि तं स्वाभि-जितनिष्कोपनाथति ॥७॥
सनातनाय सेनाङ्ग-भव ! शं भव शम्भव ! ।
भगवन् ! भविकानाम-भव ! शम्भवशम्भवम् ॥८॥
दुष्कृत मे मनोहंस-मानस ! स्याऽभिनन्मन !
श्रीसंवरधराधीश-मानसस्याभिनन्दन ! । ॥९॥
अज्ञानतिमिरध्वंसे, सुमते ! सुमतेन ! ते ।
क्रियते न नम. केन, सुमतेऽसुमतेन ते ॥१०॥
त्वां नमस्यन्ति येऽङ्क-स्थपद्म ! पद्मप्रभेश ! ते ।
त्रलोक्यस्य मनोहारि-पद्म ! पद्म ! पद्मप्रभेशते ॥११॥

सद्भक्त्या यः सदा स्तौति, सुपार्श्वमपुनर्भवम् ।
सोऽस्तजातिमृतिर्याति, सुपार्श्वमपुनर्भवम् ॥१२॥

सहर्षा ये समीक्षन्ते, मुख चन्द्रप्रभाऽङ्क ! ते ।
विदुः सकलसौख्यानां, मुखं चन्द्रप्रभाङ्क ! ते ॥१३॥

सदा स्वपादसंलीन, सुविधे ! सुविधेहि तम् ।
येन ते दर्शनं देव !, सुविधे सुविधेहितम् ॥१४॥

यथा त्व शीतल ! स्वामिन् !, सोमः सोमो मनोऽहरः ।
भव्यानां न तथा भाति, सोमः सोमो मनोहरः ॥१५॥

तं वृणोति स्वयंभूष्णु–श्रेयांसं बहु मानतः ।
जिनेशं नौति यो नित्यं, श्रेयांसं बहुमानतः ॥१६॥

वाक्यं यस्तव सुश्राव, वासुपूज्य ! सनातनम् ।
भवे कुर्यात् तमोदाव-वाः सुपूज्य ! सनाऽतनम् ॥१७॥

कस्य प्रमोदमन्यत्र, विमलात् परमात्मनः ।
हृदयं भजते देवाद्वि-मलात् परमात्मनः ॥१८॥

दृष्ट्वा त्वाऽनन्तजिद् ! भाव-पराजितमनो भवम् ।
भविनां नाथ ! नोऽभ्येत्य-पराजितमनो भवम् ॥१९॥

श्रीधर्मण क्षमाराम-प्रकृष्टतरवारिणा !
सनाथोऽस्मि कृच्छ्रवल्लीं, प्रकृष्ट तरवारिणा ॥२०॥

त्वया द्वेधारिवर्गो यत्, पदौ श्रीशाऽन्ति नाथते ।
शरणं तद्भावी ध्वस्ता-पदौ श्रीशान्तिनाथ । ते ॥२१॥

वीतरागं स्तुवे कुन्थुं, जिनं शम्भुं स्वयम्भुवम् ।
सरागत्वात् पुनर्नान्यं, जिन शम्भुं स्वयम्भुवम् ॥२२॥

विजिग्ये लीचया गेन प्रद्युम्नो भवताऽदरः ।
भविना भवनाशाय, प्रद्युम्नो भवतादरः ॥२३॥

स स्यान्मल्ले ! नमल्लेखो मल्लस्य प्रतिमल्लते ।
क्रमौ मनसि यो मोह-मल्लस्य प्रतिमल्ल ते ॥२४॥

त्रिधत्त सर्वदा यस्ते, ससुव्रत ! समुन्नतिम् ।
समास्त्रादयति स्वामिन् !, स सुव्रत ! समुन्नतिम् ॥२५॥

दृष्ट्वा समवनृत्यन्त-र्नमीश चतुराननम् ।
पश्येत् कोऽजितखं धीमा-नमीश चतुराननम् ॥२६।

श्रीनेमिनाथमानौमि, समुद्रविजयाङ्गजम् ।
हेलानिर्जितसम्प्राप्त-समुद्रविजयाऽङ्गजम् ॥२७॥

शित्रार्थी भवते ते श्री-पार्श्व ! नालीककोमलौ ।
न क्षमावनिश नम्र-पार्श्वे ! नालोक ! कोऽमलौ ॥२८॥

वरिवस्यति यः श्रीम-न्महावीर महोदयम् ।
सो श्नुते जितसम्मोह-महावीर महोदयम् ॥२९॥

श्रीसीमन्धरतीर्थेश सादर नुतनिर्जरम् ।
योऽज्ञान विदधे भस्म-सादरं नुत निर्जरम् ॥३०॥

ये वन्दन्तेऽर्हतो भाग-तैरावतविदेहकान् ।
प्राप्यते प्रवरोदर्का, तै रा वत ! विदेहकान् ॥३१॥

सप्ततिशत जिनाना-मुत्कृष्टपदवर्तिनाम् ।
वन्दे मनुष्यलोकेऽह-मुत्कृष्टपदवर्तिनाम् ॥३२॥

श्रीमन्नन्दीश्वरद्वीपेऽ-प्रतिमाः प्रणताऽच्युताः ।
द्विपञ्चाशतिचैत्येषु, प्रतिमाः प्रणताऽच्युताः ॥३३॥

यद्यात्मन्निच्छसि स्थान-मकृत्रिमकृत्रिमम् ।
जैनबिम्बव्रज तद्धे ! ऽ-म कृत्रिमकृत्रिमम् ॥३४॥

ये जिनेन्द्रान् नमस्यन्ति, साम्प्रतातीतभाविनः ।
दुष्कृतात् ते विमुच्यन्ते, साम्प्रतातीतभाविनः ॥३५॥

[1]परात्मानो जिनेन्द्रा यै-र्नीयन्ते मानसं प्रति ।
पद यान्ति जगन्मान-नीय तेऽमानस प्रति ॥३६॥

सोऽस्तु मोक्षाय मे जैनो, नयसङ्गत आगमः ।
अपि य वुद्ध्यते विद्वा-न्नयसङ्गत आगमः ॥३७॥

त्वन्नामाऽज्ञानभिद् धर्म-कीर्त्तये श्रुतदेवते ! ।
यन्न कोऽपि स्व-कीर्त्तये श्रुनदेऽवते ॥३८॥

यक्षाम्बाद्याः सुराः सर्वे वैयावृत्यकरा जिने ।
भद्र कुर्वन्तु सङ्घाय, वै यावृत्यकराजिने ॥३९॥

---

३ उपजातिवृत्तम्)

विभो ! न नाभेय ! जितास्त्वयाऽऽत्त-श्रीपुण्डरीकाचल ! के बलेन ।
भावद्विपो ध्यानमयेन विश्व-श्रीपुण्डरीका !ऽचलकेवलेन ॥१॥

सौभाग शोभातनुभाऽभिभूताऽ-ञ्जनस्य सा रैवतदैवतस्य ।
येन स्तुना श्रीरजनिष्ट वश्या, जनस्य सारैव तदैव तस्य ॥२॥

---

[1] श्रुतदेवतामधिकृत्य अथवा यक्षाम्बादिमधिकृत्य प्रान्तपद्यत्रयेण चतुर्विंशतिजिनाना, सीमन्धरादिजिनेश्वराणां च स्तुतयो भवन्ति ।

श्रीमन् ! जिनस्तोम ! भवद्विपारे-रपापदाऽष्टापद ! भूषिताय ।
नमोऽस्तु ते वास्तवर्णमानै-रपापदाऽष्टापदभूषिताय[1] ॥३॥

सम्मेततीर्थं जयताच्चिरेणाऽ-शुभप्रभावाऽरिविनाशनेन ।
यत्राऽजिताद्यै र्जिनपैः शिवश्रीः, शुभप्रभाऽवारि[2] विनाऽशनेन ॥४॥

सोऽनन्तसम्पन्न रमेत तुच्छे, श्रीअर्बुदे सन्तमसं भवोत्थम् ।
स्यन्त स्तुते यो जिनराजमाऽऽद्य , श्रीअर्बुदे सन्तमसम्भवोत्थम् ॥५॥

यत्पूजनं भुवनेषु सार-मियद्दरापीडक ! नाभिजात ! ।
मत्वेति कस्तत्र यतेत नित्य[3]-मियद्दराऽऽपीडक ! नाऽभिजात[4] ! ॥६॥

मायाऽऽपगाया जगतीजनस्याऽ-जितप्रभो ! तारण ! दुर्गमायाः ।
मन्ये कलिस्पर्शभयाद् भवारि-जितप्रभो ! तारणदुर्गमाऽऽया[5]ः ॥७॥

अश्वावबोधप्रभवं शकुन्ति-विहारसार जयति प्रतीतम् ।
तीर्थं जिन यन्मुनिसुव्रतस्य, वि[6]हारसा रञ्जयति प्रतीतम् ॥८॥

यस्ते नम. पार्श्व ! तनोति नेत-रलङ्कृतस्तम्भनकाय तस्त ।
नन्तानकः कामद ! विघ्नराशे रलङ्कृतस्तम्भनका ! ऽऽयतस्य ॥९॥

येनैकदाऽपि प्रणतोऽसि पार्श्व !, यशोभया शङ्ख ! [7]पुरा बताऽऽर ।
तस्य क्षयन्ति विघ्नततिर्वृतस्याऽ-यशोभया शङ्खपुरावतार ! ॥१०॥

[8]जन्मक्षणे निर्मितमज्जनोच्चैः, सुपर्वभिः स्वर्णगिरौ सदाऽस्यम् ।
श्रीपार्श्वनाथ नुतक्लृप्तपूज, सु[9]पर्वभि. स्वर्णगिरौ सदाऽऽस्यम् ॥११॥

---

१ भूमिकृतनिवासाय । २ वप्रे । ३ ईडरतीर्थकिरीट ! ।
४ कुलीन ! । ५ आगतवान् । ६ प्रासादलक्ष्मी । ७ आग-प्राप ।
८ जन्मोत्सवे । ९ श्रीवालपुरे ।

श्रीपार्श्व ! खेदं करहेटकस्या[1]ऽ-लङ्कारमाधाम ! विहारयन्तः ।
चित्ते भवन्त पथि च प्रभो ! ते, लङ्कारमाधामविहार ! यन्तः ॥१२॥
सुधाञ्जनाऽक्ष्णो. त्वयि यस्य जज्ञे, शमीक्षिते सत्यपुरा!ऽव त स ।
यथा शिवं वीर ! समेति पापे, शमीक्षिते सत्यपुराऽवतंसः[2] ॥१३॥
तिस्रश्चतुर्विंशतिका जिनानां, सङ्घाविभूता नितमा दरेण ।
मुक्ता क्रियासुर्जनमाशु नम्रं, सङ्घा विभूतावितमाऽऽदरेण[3] ॥१४॥
यस्य स्तवे ते जगतां प्रबोधे, सुधीर ! सीमन्धर ! धीरराजः ।
विदेहभूत्तास ! शमश्नुतेः सौ, सुधीरसीमं धरधीरराज । ॥१५॥
कुर्वे स्फुरत्केवलभास्कराय, युगन्धरायाऽस्ततमा नमोऽहम् ।
प्रवासयामास यदङ्घ्रिपद्म-युग्म धरायाः ततमानमोहम् ॥१६॥
भवाऽऽपदार्तैस्त्वयि यैर्जिनेश !, विश्वप्रभावर्यतया विनेमे ।
शिवश्रिय बिभ्रति बाहुनाथ !, विश्वप्रभावर्य ! तया विनेमे ॥१७॥
सुबाहुनाथ ! त्वमवाऽन्तरारि !, समाक्रमाविष्ट समस्तकामौ ।
यस्याऽनिश पूजयति त्रिलोकी, समाक्रमा–विष्टसमस्तकामौ ॥१८॥
जिनौव ! या स्तौति भवद्विहारं, वैदेहकैरावतभारतीयम् ।
धन्या तमःशाखिनि ! मुक्तिमार्ग–[4]वैदेहकैरावतभारतीयम् ॥१९॥
वन्दे शतं सप्ततियुग् जिनानां, कर्माऽवनीपावनमज्जनानाम् ।
उत्कृष्टकाले प्रकृतोरुपूजा–कर्माऽऽवनीपाऽवनमज्जनानाम् ॥२०॥
प्रसीद देवर्षभ[5] ! वारिषेण !, क्षणेन चन्द्रानन ! वर्धमान ! ।
नन्दीश्वरक्षोणिवतंस ! दिव्य–क्षणेन चन्द्रानन ! वर्धमान ! ॥२१॥

---

१ करेडातीर्थ । २ साचोरीतीर्थं । ३ अविलम्बेन । ४ °सार्थवाह ! ।
५ देव ! ऋषभ ! ।

स्मरन्ति ये श्रीजिनराज ! वृत्तं, परं पराभूतसमाधय ते ।
स्वर्गाऽपवर्गश्रियमाऽऽश्रयन्ते, परम्पराभूतसमाधयस्ते ॥२२॥

ससाध्य सद्धयानलयेन सिद्धाः, श्रीपुण्डरीकप्रमुखाः सुखा[1]नि ।
ये ते नताना ददतामलेप–श्रीपुण्डरीकप्रमुखाः सुखानि ॥२३॥

[अथ नन्दिस्तुतयः]

चतुर्मुख ! प्रेक्ष्य तवेश ! लक्ष्मी–मशोकभाजामपि चाऽमराणाम् ।
चित्रीयते नाम न को नताना–मशोकभाजामपि चाऽमराणाम् ॥२४॥

[2]दृष्टा जिनानामिह देशनाक्षणे, भवन्तु दन्ताशुभरात्रभासिताः ।
शिवश्रियेऽमुत्र पुनर्मुखेन्दवो, भवं तुद तां शुभरात्रभासिताः ॥२५॥

(वसन्ततिलकावृत्तम्)

श्रीसार्वसम्भव! तव स्तवनात्तमोऽन्ते-हसप्रकाश!परमाऽऽगम!पङ्कजस्य।
प्रोल्लासिवासर!भवामि भवस्य भेत्ताऽ-हसप्रकाश!परमागमपङ्कजस्य।२६।

(मालिनीवृत्तम्)

[3]मयि जिनपरिचर्या चारुवर्या विधेयात्,
परमतमतनुश्रीः शारदा भावितन्द्रम् ।
सितरुचिमपि यस्याः पर्वगर्वं विजिग्ये,
परमतमतनुश्रीः शारदाभावितन्द्रम् ॥२७॥

(ऋषभवृत्तम्)

अनुगामितां तमभिनेतरमा रमाभिः,
सकलाऽभिरा–मरमणी जनयत्यधीनः ।

१ शोभनानि खानि-ज्ञानानि । २, २५-२६-२७ इति प्रान्तपद्यत्रयेण साकं भण्यते तदा एका चतुर्विंशतिका भवति । ३ नेय नन्द्युपयोगीनी इति टीकायाम् ।

तव यद्भत्रो भवति शान्तिविभो ! विमुत्त-

सकलाभिरामरमणी ! जनयत्यधीन[1]. ॥२८॥

(जयानन्दछन्दः)

विना यामन्यत्र कचिदपि न नो तत्त्वलक्ष्म्याः,

घनाऽलीका लाभाः कुमतकमलाऽऽभोगदाने ।

चिरं जीयात्कल्पव्रततिरिव सा द्वादशाङ्गी,

घनालीकालाभाः कुमतकमलाभोगदाने ॥२९॥

(शिखरिणीवृत्तम्)

नता ये वाग्देवि ! त्वयि कवयितुं मङ्क्षु सुतरा-

मलं सद्वृत्तं ते विपदमवदाताङ्घ्रि! कुमते[2] ! ।

कृतक्षोभ तेषां क्षपयति च पूर्णेन्दुकमलाऽ-

मल सद्वृत्तं ते विपदमव दाताङ्घ्रिकुमते ! ॥३०॥

(शार्दूलविक्रीडिवृत्तम्)

यद्देहप्रभवासु भासु लुलुपे त्र्यैलोक्यदृग्विभ्रम-

छायाभासु रविग्रहेण सुमनोधर्मद्विषां शासनम् ।

तेषां ये प्रणमन्ति शासनसुरा भान्तः प्रकुर्वन्तु ते,

छायाभासुरविग्रहेण सुमनोधर्मद्विषां शासनम् ॥३१॥

(स्रग्धराछन्दः)

मिथ्यादृग्गर्वसर्वंकषविविधजिनाऽर्चाऽऽदिवर्धिष्णुपुण्य-

श्रीसङ्घे चैत्यकृत्ये सकलसुमनसः सदृशः शान्तये-मे ।

[3]ओजोवृत्त्या प्रयत्नप्रगुणितविनया जैनयक्षाम्बिकाद्याः,

श्रीसङ्घे चैत्य[4] कृत्ये सकलसुमनसः सदृशः शान्तये मे ॥३२॥

---

१ अधीशः। २ पृथ्वीजनाऽभिमते!। ३ 'चेतोवृत्या' इति पाठान्तर.।
४ च एत्य ।

पू० आ० श्रीसामप्रभसूरीश्वरप्रणीता–यमकबद्ध–

# स्तुतिचतुर्विंशतिका

(उपजातिवृत्तम्)

जनेन येन क्रियते गम्भीर–नाभे यशोभारहिते नतेन[1]।
जिनेन्द्र ! भक्तिस्त्वयि नैव भाव्यं, नाभेय ! शोभारहितेन तेन ॥१॥

मुषाण दुःखं दलितान्तरारे–मरागधीराऽजित ! मेऽघजातम्।
स्मराग्निशान्तौ तव यस्य वाक्य–मराग ! धीराजित ! मेघजातम् ॥२॥

नीतः सुखेनैव जिन ! स्मरोऽयं, पभाविनाशं भवता रणेन।
भवोदधेर्भव्यजनश्च पारं, प्रभाविना शम्भव ! तारणेन ॥३॥

श्रिताङ्ग ! नन्द्या अभिनन्दन ! त्व, निष्कोपमानप्रभ ! वानरेण।
यं नेमुषा मुक्तिवधूरवापि, निष्कोपमानप्रभवा नरेण ॥४॥

प्रयान्ति निर्वाणमनर्थमुक्त–मनाशमत्यायतमानमन्तः।
भक्त्या नराः श्रीसुमतिं जिनेश–मनाशमत्या यतमानमन्तः ॥५॥

जिनेन्द्र ! नेतुं वनिता यतस्त्वा–मनुत्तमाऽऽराव ! शमीश ! तेन।
सेव्योऽसि पद्मप्रभ ! मुक्तिभाजा–मनुत्तमारा वशमीशते न ॥६॥

चक्रे नमो जिन ! कृताऽखिलाङ्गि–महायते ! सन्नतमस् ! तकेन।
विलङ्घ्यते भीमभवः सुपार्श्व !, महायते ! सन्नतमस्तकेन ॥७॥

जिनेन्द्र ! चन्द्रप्रभ ! सान्द्रकर्म–विलोपक दर्पमलो भवन्तम्।
न जातु शिश्राय समग्रदोषा–विलोऽपकन्दर्पमलोभवन्तम् ॥८॥

तव स्तवं यो विधिना विधत्ते, सुधीरवश्यं सुविधेहि तस्य।
मोहेभकण्ठीरव ! मुक्तिसौख्य, सुधीर वश्यं सुविधे ! हितस्य ॥९॥

---

१ नतेन।

नमो मुनीन्द्राय करोति यस्तेऽ-समान ! मल्ले ! खनये हितानाम् ।
सिद्धिं समृद्धिं जगदीश ! तस्य, समानमल्लेख ! नयेहितानाम् ॥१९॥

उत्सृज्य राज्यं श्रितसंयमाय, निरन्तरायाऽसमरागमाय ! ।
नमोऽस्तु ते सुव्रत ! सत्तमाय, निरन्तरायाऽसमराऽऽगमाय ॥२०॥

तव [1]क्रमास्ते कृशयन्तु मोहं, नमे ! दुरापास्ततमस्तमान ! ।
यद्भक्तिरिष्ट फलमाऽऽशु दद्यान्-न मेदुराऽपास्ततमस्तमा न ॥२१॥

जगाम रैवतकं यदूनां, राजीमतीत्यागमना दरेण ।
पुनातु नो नेमिजिनः स मुक्तो, राजीमतीत्याऽगमनादरेण[2] ॥२२॥

विजृम्भते नाथ न मन्मथस्य, प्रभावनो दीप्रसरोजनेत्र ! ।
त्वमर्च्यसे येन जिनेश ! पार्श्व !, प्रभावनोदी प्रसरो जनेऽत्र ॥२३॥

भिद्यादसौ वीरजिनो जनाना-मदभ्रमानं गतमोहरेणुः ।
चित्तस्थिते यत्र नृणां भवः स्यान्-मदभ्रमानङ्गगतमोहरेऽणुः ॥२४॥

[3]भवार्णवे मृत्युजरातरङ्गे, सारं भजन्मोदकरा जिना वः ।
सुखश्रियामुः सुरवृन्दवन्द्या, साऽऽरम्भजन्मोदकराजि नावः ॥२५॥

तदस्तु जैनं मतमन्तहेतु-र्ममाऽनवातङ्कवितानकस्य ।
यद्भेजुषः स्यात्कुमतद्रुमाणा-ममानवातं कविता न कस्य ॥२६॥

श्रियं विधत्तां श्रुतदेवता वः, प्रभासमानच्छविभालकान्ता ।
विद्वन्मनःकैरवबोधसोम-प्रभासमाऽनच्छविभाऽलकान्ता ॥२७॥

---

१ गुरुत्वादत्र बहुवचनमिति ज्ञेयम् । २ सम्भ्रमेण विना । ३ एतद् प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिचतुर्विंशतिका भवति ।

पू० आ० श्रीजिनसुन्दरसूरीश्वर-प्रणीता, यमकबद्ध-

# स्तुतिचतुर्विंशतिका

(शार्दूलविक्रीडितवृत्तम्)

श्रीमन्नाऽऽद्यजिन ! श्रियं सृज सतामभ्यर्थिताभाऽऽनत-
श्रीदा[1]-ऽऽनन्दितदेवपाद ! परमाऽऽलोकत्र ! यीपाऽवन ! ।
यस्याऽऽज्ञा तव तन्वती विजयते पुंसामसीमोदय -
श्रीदानंन्दितदेवपादपरमा लोकत्रयीपावन ! ॥१॥

तन्वा सत्त्वसतत्त्व ! सत्त्वहितकृत्तत्त्वानि शैवं सुखं,
सद्यो निर्जितशत्रुजात ! सविता ! पद्माभिरामोदय[2] ।
रोहन्मोहतिमिस्रसंहृतिहृतौ विश्राणिताभि[3]र्विशोऽ-
सद्योनिर्जितशत्रुजात ! सविताऽऽपद्माऽभिरामोदय ! ॥२॥

श्रेयोऽम्भोजनभोमणे ! दद्यदिह स्वान्ते सतां यो लसत्-
कल्याणो रुरुचे सदानततम ! श्रीशम्भवाऽसम्पदम् ।
दूरीकृत्य स कृत्यविज्ञ ! तनुतां नेतः ! स्वभक्ति भवान्,
कल्याणोरुरुचे ! सदा नततमश्रीशं भवा[4]ऽसं पदम् ॥३॥

विश्वं धर्मकथाप्रथाभिरपृणः कीर्त्याऽस्तगङ्गापयो-
दोपाकान्तरुचे-हितोऽमद[5] ! त्रिपत्त्रा ! ऽतापकोऽपाश ! यः ।
नन्द्याः श्रीअभिनन्दन ! त्वमनिशं सत्त्वेषु स श्रीजिनोऽ-
दांपा ! ऽकाऽन्तरुचे ! हितोऽमद ! त्रिपत्त्राताऽपकोपाऽऽशयः ॥४॥

---

१ निमिता । २ आनन्दय । ३ पुरुपान् । ४ भवान्तकम् । ५ रोगच्छेत्ता ।

र्यं नोक्षबव्यथकस्मरज्वरभराऽपस्मारनिर्नाशिने,
दोषज्ञः सुमतेर्हिता ! ऽनिभजतां कुर्या महोपाऽवनः ।
धर्मं नित्यममन्दसम्मदपदाम्भोजन्मयुग्मानमद्—
दोषज्ञः सुमते ! हितानि भजतां कुर्या महीपावनः ॥५॥

सद्मानः कृतसद्मनोमत ! नमत्पद्मे शपद्मासन !,
श्रीपद्मप्रभयाऽमितप्रतिभया पद्मोपमानाऽऽश्रयः ।
दत्त्वा त्व हितकर्तृतां त्रिजगतः सार्द्धं स्वधर्मात्मिकां,
श्रीपद्मप्रभ ! यामितप्रतिभयाऽपद्मोऽपमानाऽऽश्रयः ॥६॥

निस्सीमातिशयश्रिया परिगतस्तूर्णं वितीर्णाऽऽनताऽ—
दृष्टोऽपारममुद्रतानवपद ! द्वन्द्वाऽपचित्याऽञ्चितः ।
भव्यान् सर्वगुणैः सुपार्श्व ! भयतो नित्य त्वमादीनवाऽ[2]—
दृष्टाऽपाऽऽर ! समुद्र ! रतानव[3] पदद्वन्द्वापचित्या चितः ॥७॥

यस्त्वा निर्भरभक्तिरर्चति विभो ! कण्ठे निवेश्य स्मिता,
सद्मालां छितविग्रहः सुमनसा छायाभृतामाऽऽधिप[4]. ।
श्रीचन्द्रप्रभ ! देव ! तस्य तनुपे स्वामित्वमस्ताऽहितोऽ,
सद्मा लाञ्छितविग्रहः सुमनसा छायाभृता माऽधिपः ॥८॥

प्रीणन्कृत्स्नगुणाऽर्पणेन शमिनः श्रीसयमाऽन[5].सुधू—
रुद्धारे[6] वृषभोपमानऽमतमोभानूयमानोदऽयः ।
स्वामिन् ! नः सुविधे ! विधेहि सुविधिं सार्वश्रिया यो धुधै—
रुद्धारे ! वृषभोऽपमान ! मतमोऽमा नूयमानोदयः ॥९॥

१ रागादिक्षय॰ । २ दोष॰ । ३ रक्ष । ४ आधिशोषकः । ५ रथ॰ ।
६ °उद्वहने ।

निस्सङ्गो विनमत्सु वत्सलमना मूर्ध्ना वितन्वन् धियोऽ—
वाचा शीतल ! यासु धावदनयाऽऽध्याऽऽत्मसु ध्यानत ।
तत्तत्प्राक्तनकर्मघर्मविधुरानाऽऽसिञ्च नः स्वाश्रितान्,
वाचा शीतलया सुधावदऽनयाऽध्यामा[1]ऽऽत्मसुध्याऽऽनतः ॥१०॥

दीक्षां यस्य जिघृक्षतो भवजले विज्ञैर्व्यतर्कि श्रियां,
दानेनाऽऽसुमतां सुपर्वफलदः श्रेयासतीर्थकरः ।
स्वाऽऽज्ञां यच्छतु मे स मत्सरमदाद्यापत्सु पित्सोस्तमो—
दाने[2]नाऽऽसु मतां सुपर्वफलदः श्रेयांसतीर्थङ्करः ॥११॥

कुर्वञ्ज्ञानगुणक्रियासु भविनां प्रेक्षां फलाऽऽख्यानतो,
रक्तांकप्रभवा[3]सुपूज्य ! चरणत्राणोपमानक्षमः ।
जीयास्त्रीणि जगन्ति नेतरवितु कारुण्यपुण्यार्णवो,
रक्ताङ्कप्रभ ! वासुपूज्य ! चरणत्राणोऽपमान ! क्षमः ॥१२॥

यं संसेव्य वशं नयन्ति भविनो दुर्जयमप्यञ्जसा—
कान्तारागतमोहर जितहरिं धीर स्मरस्वाऽहितम् ।
त विद्वन् ! विमलं जिनेशमनिशं चित्ताऽऽस्तदोषव्रजाऽ—
कान्ताऽऽराऽगतमोह ! रञ्जितहरिं वीर स्मर स्वा-हितम् ॥१३॥

विश्राण्य प्रमदंगुणिन् ! अगणितां दीक्षाजिघृक्षाक्षणे,
मुक्ताराजिमऽनन्तरायमतनोराऽऽजन्मदानाऽदरः ।
भव्यव्रातमनन्तदेव ! धनिन दारिद्र्यमुद्राञ्चितं,
मुक्ताऽऽराजिमऽनन्तरायमतनो ! राजन्मदाऽनादरः ॥१४॥

दीव्यत्केवलबोधदर्पणमहासङ्क्रान्तवस्तुप्रथ !,
श्रीधर्मप्रभवाऽममाऽनघ ! नताऽमर्त्याऽसुराऽऽलीनक ! ।

---

१ °निर्मल° । २ °निरसनेन । ३ मुखोत्पत्ति याभ्यः तासु ।

सृष्टाऽभीष्ट ! परीष्टयस्तव हृतारिष्टा न केषां सम,
श्राधर्मप्रभवाऽऽममानघनतामस्त्यांऽऽसुराऽऽलीनक ! ॥१५॥

विश्वैश्वर्यमऽसाधयो व्रतपदेऽनत्स्तोऽप्यहो ! यो घन—
श्रेय काञ्चनमन्दराऽऽगम ! हित सन्मानसाऽऽवाऽऽसनः ।
स त्वं शान्तिविभो ! भवार्णवतरी दद्याः स्वभक्ति जगत्—
श्रेयः काञ्चनमन्दरागमहितः सन्मानसाऽऽवास ! न. ॥१६॥

यैर्भाव्यभ्युदयैः शुभैर्भविजनैः पादद्वयं ते मुदा,
मन्दारप्रसवैरमाहि तमसाऽमान्य महाऽऽशाऽऽसनम् ।
तैः श्रीकुन्थुजिनाधिनाथ ! जगदीशत्वं सुखेनाऽऽप्यते,
मन्दाऽऽरप्रसवै-रमाहितमऽसामान्य महाशासनम् ॥१७॥

विभ्राणे क्षितिमण्डलेश्वरशिरःकोटीषु कोटीरतां,
सावद्योपरमे मनो रमय मेऽरामारमाऽऽराजनः ।
निस्सीमाऽतिशयैकधाम्न्यरजिन ! स्वस्याङ्घ्रिपङ्केरुहेऽ—
सावद्योपरमे मनोरमयमेराऽऽसमाऽऽरमाराऽजनः ॥१८॥

संसेव्या वहु राजहंसनिवहै क्लृप्ताऽनणीयः सुखोत्—
पादाः पुण्यनया नताऽमर ! सतां धामश्रियामुज्ज्वलाः ।
निष्पङ्काः कलयन्ति किं परिगताः श्रीमल्लिनेतर्भवत्—
पादाः पुण्यनया न तामरसतां धामश्रिया मुज्ज्वलाः ॥१९॥

---

१ धर्मस्य प्रभवो यस्मात् । २ चिक्षप । ३ लक्ष्मीरक्षा तान् आ-समन्तात् सनोति-ददाति । ४ मुनिपूजितः । ५ अपूजि । ६ अर्थात् पापीना । ७ हे लक्ष्मीद ! । ८ °आजति-क्षिपतीत्यर्थ. ।

जज्ञे भावितमानसा दृढरतिर्यत्राऽतीर्णे यमः-
श्रीमत्सुव्रतमालया परमया पद्मामवित्री शमे।
वृद्धि तस्य मतं श्रितस्य भवतः कल्याणवल्ली मम,
श्रीमत्सुव्रत ! माऽऽलयाऽऽप रमया पद्मासवित्रीश ! मे ॥२०॥

राज्ये यस्य मतिर्बबन्ध न रतिं वैराग्यभाजः स्फुरन्-
भास्वत्कान्तमहेभवाजिकलभेऽरीणां श्रिय दातरि।
स त्वं सत्त्वनिधे ! नमे ! वितरतु मे स्वामिन् ! स्वधर्मे धृतिं
भास्वत्कान्तमहे भवाऽऽजिकलभेऽरीणां[3] श्रिय दातरि ॥२१॥

यं तत्त्वन्तमऽमन्दभक्तिरभजद्विज्ञार्च ! लोकत्रयी-
रक्षामञ्जनविग्रह शमऽयिता नेमे ! स दामोदरः।
कैः स्वज्ञानगुणौषिभिर्न स भवान् भूयोऽनुभावैः शुभै[4]-
रक्षामं जनविग्रह शमायता नेमे सदाऽऽमोदरः ॥२२॥

विश्वाऽऽल्हादक ! देवपादप इव प्रभ्राजमानः श्रितः,
पत्त्राणां सुमनोरमोऽमितिफलैच्छायामऽहीनः श्रियम्।
श्रीमत्पार्श्व जिनेश्वर ! त्वमनिशं विश्राणयाऽत्राऽऽभवाऽऽ-
पत्त्राणा सुमनोरमो मितिफलंच्छायामहीन. श्रियम् ॥२३॥

श्रीमद्वीर ! मधुव्रतव्रतजुपां पादाम्बुजे त्वं निजे,
सश्लोके बलदीपकस्तनुमतां गाङ्गेयकान्ते मम।
कारुण्यैकनिधे ! प्रभावजलधे ! तत्त्वप्रकाशाऽऽत्मिकां,
सश्रीकेवलदीपकस्तनु[5] मतां गां गेयकान्ते ! ऽमम ! ॥२४॥

---

१ मथिकानि यानि व्रतानि। २ च्छेतरि। ३ अहीनाम्। ४ महान्तम्। ५ वितर।

लक्ष्मीभोगमुखाद्यभीप्सितकरं संनम्रनाकीश्वरं,
सन्नालीकरुचि क्रमोभयमहं तारं भजन्मोदकम् ।
श्रीसर्वज्ञ ! तवोक्तितोऽम्बु रखिलं सेवे तरण्डोपमम्,
सन्नाऽलीकरुचिक्रमोऽभयमहन्ताऽऽरम्भजोदकम् ॥२५॥

सान्द्राऽऽनन्द ! महेन्द्रवन्दितपदे ! क्लप्तत्रिलोकी-हिताऽऽ-
या धोरा जिनराजि ! वारणमते ! हेमासनाऽध्यासिनि ! ।
भूयाः भक्तिभृतां भवाऽरिशमिनि ! श्रीभूतये निर्निभाऽ-
या धोराजिनराऽऽजिवारणमते ! हे मासनाऽऽध्यासिनि ! ॥२६॥

सत्पद्यः श्रितश्रीवरः सुरगणाऽऽसेव्यः सुपर्वर्द्धिमा-
नऽस्ताघः सुतरङ्गभङ्गकमलः पाठीनपीठस्थितिः ।
रत्नाम्भोधिरिवाऽऽगमाऽऽतनु सतामक्षामलक्ष्मीमहा-
नऽस्ताऽघः सुतरङ्गभङ्गकमलः पाठीनपीठस्थितिः ॥२७॥

श्रीसर्वज्ञमतस्थभव्यनिवहप्रत्यूहनिस्तर्हणाऽऽ-
मुक्ताऽहा रविराजमानहृदया साऽऽमोददे ! हेऽमदे ! ।
हुयाः शासनदेवि ! देवमहिता नः संविदः सम्पदो,
मुक्ताहारविराजमानहृदया साऽऽमोददे ! हे मदे ! ॥२८॥



---

१ जीवरक्षाशीलः । २ क्षिप्तः अलीके रुचिकमो येन सः ।
३ प्रान्तपद्यत्रयेण साकं भण्यते भवति तदास्तुतिपञ्चविंशतिका ।
४ आस्तिक्यम् । ५ कृतहर्षभङ्गा एव लक्ष्मीः यस्य सः । ६ गणधर० ।

पू० पंन्यास श्रीचारित्रराजगणिप्रणीता–यमकबद्ध–

# स्तुतिचतुर्विंशतिका

(अनुष्टुप्)

श्रीनाभेयजिनः सोऽव्याद्–रागसागरमन्दरः ।
मुक्तं य नाऽऽप भवभू–राऽऽगमागरम दरः ॥

तं नमस्कुर्महे भक्त्ये–रजितं विनताऽमरम् ।
यः पाति जनतां दोषै–रजितं विनत- म म् ॥

भवतो भवतः पाया–त्सदाऽऽश भवनाय कः ।
न य शिवश्रियः स्तौति, सदा शम्भवनायकः ॥

अभिनन्दनतीर्थेश !, भवताऽपाप ! नोदितः ।
उत्तार्योऽहं भवाम्भोधे–र्भवतापाऽपनोदिनः ॥

रतिस्तवाऽस्तु मे स्वामिन् !, सुमते ! सुमते हिते ।
आसन्नश्रेयसा प्राप्त–सुमते ! ऽसुमते–हिते ॥

शिवश्रीदानतो नम्रान्, पद्मप्रभ ! स मोदय ।
यः स्मरं जितवान् भाऽस्त–पद्मप्रभ ! समोदय ! ॥

श्रीसुपार्श्व जिनाऽधीश !, भवतापाऽपहारिणा ।
सनाथेय मही जज्ञे, भवता पापहारिणा ॥

स्तुमस्ते पुनतः स्वामिन् !, महसेनन्रृपाऽन्वयम् ।
पाऽऽगान्मोदयतो ज्ञान-महसे-न ! नृपान् वयम् ॥

कुरु श्रीसुविधे ! बोधिं, मम मोहमहोजयी ।
यया सनारशत्रोः स्या–ममर्मोऽहम्हो ! जयी ॥

त्रिकाल चरितं चित्तो, स्मरामोऽभयवर्द्धनम् ।
श्रीशीतलजिनेन्द्रस्य, स्मराऽऽमोभयवर्द्धनम् ॥१०॥

भावतो यैः श्रितः सिद्धो, श्रेयांसः सत्त्वराऽऽशयः ।
ते भवन्ति सदा लब्ध–श्रेयांसः सत्त्वराशयः ॥११॥

मानवैर्दानवैर्देवै-र्वा सुपूज्य ! शिवाऽऽलयः ।
यैः श्रितस्त्वं भजत्येतान्, वासुपूज्य ! शिवाऽऽलयः ॥१२॥

यस्व धत्से नृणां देव !, भवाऽब्धौ तारकप्रभाम् ।
विमल ! श्रेयसे बिभ्रद्, भवाऽब्धौताऽऽरकप्रभाम् ॥१३॥

वन्देऽनन्तजितः पादान्, परमाऽऽनन्ददायिनः ।
कर्मणां मर्मणां लक्ष्या, परमान-ऽन्ददायिनः ॥१४॥

श्रीमद्धर्मजिनो जीया-द्वारिताऽऽपदघस्मरः ।
नृणामन्तर्मलाऽपोह-वारि तापदघस्मरः ॥१५॥

श्रीमच्छान्तिप्रभो ! पाहि, जगतीं दुरितापहः ।
भवद्वेषी नवो यः त्व, जगतीन्दुरि-तापहः ॥१६॥

कुन्थुनाथ ! प्रसादात्ते, मुरमानवमानितः ।
न कः पुमान् भवेद् भोगान्, मुरमाऽनवमानि-तः ॥१७॥

अरनाथ ! श्रियाऽपार-परभागमनोहरः ।
न केषां प्राप्तससार-परभाग ! मनो हरः ॥१८॥

श्रीमन्मल्लि ! जिनाऽधीश !, समतासारमानसः ।
नतस्त्वं येन काः प्रापाऽ-समतासा रमा न सः ॥१९॥

श्रये त्वां शरणं दोषाऽ-जित ! पद्मातनूद्भव ! ।
श्रीसुव्रत ! जगज्जैत्र-जितपद्मानतूद्भव ! ॥२०॥

श्रीनमे ! पुनतः पादान्, विशाल त्रिजयाऽन्वयम् ।
पूज्यस्य संस्तुमः सर्व-विशाऽऽलम्बिजयान् वयम् ॥२१॥
श्रीनेमे ! क्रियते येन, विभया समयाऽऽदरः ।
स्तुतौ ते भासुराऽय स्याद्, विभया समयाऽदरः ॥२२॥
श्रीमत्पार्श्वप्रभार्वन्दे, पादद्वयमुदारताम् ।
बिभ्रत् विश्वां यदाऽऽपद्भ्योऽ-पादऽद्वयमुदारताम् ॥२३॥
यः श्रीवीर ! स्तुते तेऽस्त-परमान ! यशोऽभितः ।
लभतेऽसौ श्रियः का नो परमा नयशाभितः ॥२४॥

(द्रुतविलम्बितवृत्तम्)

जिनपति र्भवतो भवतोऽवता-दऽमरदानवमानवनायकैः ।
श्रितपदो यदुपास्तिरकारि नाऽ-दमरदानवमानऽवनाय कैः ॥२५॥
[1] शिवसुखाय भवन्तु जिनेश्वराः, समतया हितयाऽमलमानसाः ।
सुरवरैर्महिता बहुरूपयाऽ-समतयाऽऽहितया मल[2]मानसाः ॥२६॥
जिनपतेर्मतमस्तु शिवाय तद्, विततभङ्गमहारि नयाऽऽलयम् ।
परकुशास्त्रजुषा गतयाऽपि यत्, विततभङ्गमहारि न या[3] लय[4]म् ॥२७॥
भवतु विघ्नविघातविधायिका, तनुभृतां सकलश्रुतनायिका ।
श्रयति या स्वतनुं विशदद्युताऽतनु भृतां सकलश्रुतनायिका ॥२८॥



---

१ प्रान्तपद्यत्रयेण सार्क भण्यते तदा स्तुतिपञ्चविंशतिका भवति ।
२ कर्ममल मानं च स्यन्तीति । ३ लक्ष्म्या । ४ प्रकर्षम् ।

पू० पंन्यासश्रीचारित्ररत्नगणि-प्रणीता-यमकबद्ध-

# स्तुतिचतुर्विंशतिका

(अनुष्टुप्)

यस्ते श्रीऋषभ ! स्तौति-पदतामरसद्वयम् ।
स भुङ्क्ते परमानन्द-पदतामरसद्वयम् ॥१॥

भगवन् ! भवतो भव्या, जितशत्रुभवाऽदरम् ।
प्रपद्यन्ते पद सद्यो, जितशत्रुभवाऽदरम् ॥२॥

यद्यभीप्सथ निस्सीम-शम्भव परमाऽऽगमम् ।
तदा भवत भो भव्याः !, शम्भव परमागमम् ॥३॥

स्वगोभिर्जगतः सर्वाऽ-भिनन्दन ! सुखाकरः ।
तप्तां भवार्त्तितापेनाऽ-भिनन्दन ! सुखाकरः ॥४॥

सुमते ! कृतनम्राङ्गि-मङ्गलोद्भव ! भारती ।
तनुते तव विज्ञानां, मङ्गलोद्भव ! भारती ॥५॥

देहद्युतिजिता ताम्र-पद्मप्रभमहीनतम् ।
सेवे शिवाय देव ! त्वां, पद्मप्रभ ! महीनतम् ॥६॥

तस्मिन् सर्वश्रिया पाप-हृदये भवदागमः ।
वास सुपार्श्व ! यस्याऽऽप, हृदयेऽभवदागमः ॥७॥

येन त्वच्चरण पूता, चन्द्रप्रभ ! मही नता ।
सुलभा तस्य कीर्त्यास्ति-चन्द्रप्रभ ! महीनता ॥८॥

बुधाः ! सेवध्वमप्नेश, सुविधिं कामदायकम् ।
यदि वो बुद्धिराराद्धुं, सुविधिं कामदायकम् ॥९॥

देवान्तरैः कथं तेऽस्तु, नन्दाभव ! समानता ।
यतो जगत्त्रयी जाता–नन्दाऽभव ! समा नता ॥१०॥

मुक्त्यर्द्धी नमता दत्तो, श्रेयांसं कमलाकरम् ।
स्तवीमि गुणपद्मानां, श्रेयांसं कमलाकरम् ॥११॥

सम्प्राप्तविश्वत्रितयी–जयाङ्गजमदाऽन्तकम् ।
वासुपूज्य ! भजामि त्वां, जयाङ्गजमऽदान्तकम् ॥१२॥

विमलेश ! श्रितोपान्तं, सन्नताऽमरसंसदा ।
स्तुवे तवाऽङ्घ्रियुग्म श्री–सन्नतामरसं सदा ॥१३॥

नमस्कर्ता न तेऽनन्त–राज ! मानवनायकः ।
गुणद्रुमाणां माहात्म्य–राजमान ! वनाय कः ? ॥१४॥

विश्वातिशायिमाहात्म्यो–दयाय परमाय ते ।
नतोऽस्मि धर्म ! निस्सीम–दयाय परमाऽऽयते ॥१५॥

तव भक्ति विना स्थानं, सदा भावि भवोदधौ ।
अतस्त्वां सुकृती शान्ते !, सदाऽऽभाविभवो दधौ ॥१६॥

कुन्थुनाथ ! जगन्नाथ–श्रीनन्दनजयेश्वर ! ।
असीमगुणलक्ष्मीणां, श्रीनन्दन ! जयेश्वर ! ॥१७॥

चक्रवांस्तव यः सेवां, परमाऽऽदरसङ्गतः ।
परं पद स दुष्कर्मो–परमादरस गतः ॥१८॥

दुरन्तदुरिताऽम्भोधि- कुम्भोद्भव ! भवाऽपदम् ।
हत्वा तत्त्वाप्तयेऽधाना कुम्भोद्भव ! भवाऽपदम् ॥१९॥

प्रणतस्त्वामहं देव !, सुमित्रभव ! भक्तितः ।
तन्मा मोचय विश्वैक-सुमित्र ! भवभक्तितः ॥२०॥

क्रमाम्बुजं नमेः स्तौति, नताऽमरसभाजनम् ।
अस्प्राक्षीज्जातु २ त्क्षोणी, न तामरसभाजनम् ॥२१॥
श्रीनेमे ! प्रीतिराप्तेन, भवता मेऽघवारिणा ।
चातकस्येव वक्त्रान्त-र्भवता मेघवारिणा ॥२२॥
यस्त्वां पार्श्व जिन ! स्तौति, परमानन्दभावितः ।
तस्मिन् नित्योदिता राग, परमाऽऽनन्द भाऽवितः ! ॥२३॥
त्वया जितान्यदेवर्द्धि-र्वर्धमानप्रभावत. ।
त्वयि देवाधिदेवत्व, वर्धमान ! प्रभावतः ॥२४॥
जिन ! तद्वदने दृष्टे, रजनोश्वरहारिणी ।
प्रीतिर्मम तमोराशे-रजनीश्वर ! हारिणी ॥२५॥

[1]स्वर्णाञ्जनजपाब्जेन्दु-रुचिराजितविग्रहाः ।
देयासुर्वः श्रियः सार्वा, रुचिरा जितविग्रहाः ॥२६॥
निर्णिक्तभक्तिमन्त मां, महाऽऽगमनयाऽञ्चित ! ।
महोदयं सतां दत्त-महाऽऽगम नयाऽञ्चित ! ॥२७॥
पदे नन्दन्ति ते भक्ताः, श्रुतदे ! विततोदये ।
तव भक्तिविधौ चित्तं श्रुतदेवि ! ततो दये ॥२८॥

---

( २ )

(वसन्ततिलकावृत्तम्)

आनन्दनम्रसुरनायक ! नाभिजात !,
भक्ताऽङ्घ्रि सङ्घटितदिव्यकु[2]नाभिजातः ।

---

१ प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिपञ्चविंशतिका भवति ।
२ निधिसमूहम् ।

चित्तं ममेश ! भवभञ्जन नाभिजाऽऽतं[1][2],
कस्त्वां शिवेच्छुरभिवाञ्छति नाऽभिजातः[3] ॥१॥

धीराजि ! तत्र वितनोपि शिव गुणाम्बु—
धी–राजितस्तव मुदा तनुते नुतिं यः ।
धीराऽजित ! स्मरजये ! शिवमाप्नुकामा—
धीरा जितश्रमतया स्तुवते ततस्त्वाम् ॥२॥

जेतुं रिपुं विहितहीनदशं भवं तं,
यं योगिनोऽपि विनुवन्ति भृशं भवन्तम् ।
त्वां स्तौमि देव ! तनुधीरपि शम्भव तं,
तद्रक्ष मां विषमदुःखवशं भवन्तम् ॥३॥

विश्वप्रकाशियशसा दितराजमानः,
प्राप्ताऽसुरेन्द्रनृपदेवतराजमानः ।
देवाऽभिनन्दन ! गुणाऽद्भुत ! राजमानः,
सार्वश्रिया स्थिरतरा वितराऽज ! मा नः ॥४॥

कल्याणकायरुचये द्युकृताऽवनीक[4]—
कल्याणकाय पुरुहूतकृतोत्सवौघैः ।
कल्याणकाऽऽयजनकाय महाऽऽगमस्य,
कल्याऽऽणकाय[5] भवते सुमते ! नतोऽस्मि ॥५॥

पद्मप्रभाऽव जिन ! मां नमदङ्गिदत्त—
पद्म ! प्रभावविनत भवतोऽतितप्तम् ।

---

१ ब्रह्मा । २ सततं आगच्छ । ३ कुलीनः । ४ पञ्च । ५ भाषकाय ।

द्मप्रभावऽगणनोद्यतदेहदीप्ति[1]—

पद्म ! प्रभावकमलामतुलामुपेत ॥६॥

स्वामिन् ! सुपार्श्व ! भगवन् ! जिनकोपमान !,

प्रह्लाङ्गिमानसजले कृतकोपमान ! ।

स्तोता प्रयाति तव देव ! नकोपमान—

प्रायः शिव जगति यस्य हि कोपमा[2] न ॥७॥

प्रौढि परामधित[3] चिन्महसे-नराज—

जंत्र ! त्वया तनुभुवा महमेनराजः ।

कान्तिस्तथाऽस्तसितधामहसेन राज—

त्युर्वितले नतमहामहसेनराजः ॥८॥

कीर्तिप्रतापपरितर्जितपुष्पदन्तं,

नम्रेप्सितप्रथनदेवतपुष्पदन्तम्[4] ।

विज्ञा हितैकमतयो जिनपुष्पदन्त,

भक्त्या स्तुवन्ति कति न स्मितपुष्पदन्तम् ॥९॥

३ मान् कृपाऽर्णव ! भवाऽऽर्त्तमान-ऽवे-न !,

श्रीशीतल ! प्रबलपापतमानवेन[5] ! ।

त्रात त्वया हि भजतेऽद्भुतमा नवेन,

स्तुत्या सता प्रणतदेवतमानवेन ॥१०॥

वाचः प्रभो ! तव तमश्छिदि भानवन्ति,

श्रेयांस ! विश्वकुमुदे हिमभानवन्ति ।

---

१ पदोर्मा यस्य । २ सुखोपमा । ३ दधार । ४ कल्पवृक्षम् । ५ नवीनसूर्य ।

भव्यांश्च भावरिपुलूनशुभाऽनवन्ति,
यासा पुरः परवचांसि न भानवन्ति ॥११॥

श्रीवासुपूज्य ! कृतविश्वसभाजनस्य[1],
धर्मोपदेशरससिक्तसभाजनस्य ।
भक्तास्तव त्रिदशक्लृप्तसभाजनस्य[2],
सिद्ध्यन्ति[3] योगिजनमानसभाजनस्य ॥१२॥

त्वत्कीर्तयो विमलतीर्थपते ! जयन्ति,
याश्चन्द्रमण्डलरुचोऽप्यपतेजयन्ति ।
ये ताः स्तवैरभिनवैर्न हि तेजयन्ति,
दुर्मेधसः शुभगतिं किमु तेऽज ! यन्ति ? ॥१३॥

निस्तुल्यकेवलरमाकमलोपमान !,
स्वामिन्ननन्त ! गतपङ्कमलोऽपमान ! ।
यस्ते तनोति सविवेकमलोप ! मान—
मस्य श्रियः सुरपतेः कमलोपमान ॥१४॥

मुक्त्यर्थमुद्यतमतिर्जनकामदाय,
भक्त्या ननाम भवभञ्जन ! कामदाय[4] ।
तुभ्यं प्रजा त्रिजगतीजनकामयाय,
श्रीधर्मनाथ ! जिनराज ! न काऽऽमदाय ॥१५॥

यैस्ते क्रमाब्जमसुमद्भिरमानि शान्ते,
तेषां पदे कृतिभिराप्तिरमानि शान्ते ! ।

---

१ प्रीति । २ सत्कार । ३ सिद्धिं प्राप्नुवन्ति । ४ कामच्छिदे ।

तस्मादमी महनमीश ! रमानिशान्ते,

तन्वन्ति तत्र मुक्तैः[1] परमा निशान्ते ॥१६॥

नम्राऽङ्घ्रिनिर्मितदुरापरमाऽऽगमेन,

नानाभवक्लमभरोपरमाऽगमेन[2] ।

निन्ये सुखं त्रिभुवनं परमाऽऽगमेन[3],

श्रीकुन्थुनाथ ! भवता परमाऽऽगमेन ॥१७॥

ये दृष्टिगोचरमहो ! परमाऽऽदरेण,

नीता दुरन्तदुरितोपरमादरेण ।

अ साद्य ते त्रिदशभूपरमा दरेण,

धाम श्रयन्ति रहितं परमादरेण[4] ॥१८॥

मल्लिप्रभो ! जनमनोम्बरवास्तवेन[5] !,

पादौ ध्रुता मम शिवे वरवास्तवेनः[6] !

यस्त्वा स्तवीति जगदीश्वर ! वा स्तवेन—

स स्वामिनः सरसपीवरवास्तवेन ॥१९॥

ये भापित श्रुतिषु ते परमाऽऽनयन्ति,

ते सुव्रतेश ! कुमतोपरमान-ऽयन्ति ।

ये त्वा त्रिलोकहिततत्पर ! मानयन्ति,

ते निर्वृ ति किमु गुणैः परमा न यन्ति ? ॥२०॥

चित्तं नमे ! त्वयि जगज्जनका!ऽऽन्ति[7] काय[8]—

कामेन येन कनकोज्ज्वलकान्तिवाय ! ।

---

१ प्रभाते । २ अगमेन-वृक्षेण । ३ सिद्धान्तेन । ४ प्रकृष्टो मादो त राति ददाति तेन इति परमादरेण । ५ वाः ! तव इन ! । ६ हे वरवास्तो! एनः । ७ दृढ बध्नाति । ८ क-सुख, आय-लाभ ।

तस्मै श्रियः शुभदशाजनकाऽन्तिकाय,
रज्यन्ति कीर्तिविजिताऽमृतकान्तिकाय ॥२१॥

नेमे ! भवाऽनसितकीर्तिभृताम्बुराशि—
नेमे[1] ! भवाऽनवरत शिवसम्पदे मे ।
नेमे[2] ! भवाऽनणुनगच्छिद्—दिमुक्तिकामै—
र्नेमे भवानमरदानवमानवर्यैः ॥२२॥

स्वामिस्तवोद्यतमदम्भवता नवाय,[3]
येन प्रमोदमुभगीभवता नवाय[4] ।
श्रीपार्श्व ! तस्य भगवन् ! भवताऽनवाय[5]—
निर्मुक्त ! भाव्यमचिरं भवतानवाय[6] ॥२३॥

श्रीवर्द्धमान ! नतमानसशोध ! यन्ति[7],
स्वैरं यशांसि भुवनं तव शोधयन्ति[8] ।
बुद्धया चकोरनिकराः तव[9] शोधयन्ति,
चन्द्रद्युतामपरदेवयशो धयन्ति[10] ॥२४॥

वाचस्तवेश ! भुवनानि सभाजयन्ति[11],
विद्योन्मदिष्णुपरवादिसभा जयन्ति ।

---

१ पृथ्वि ! । २ वज्र ! । ३ व्याप । ४ स्तवाय । ५ अज्ञानरहित ! । ६ संसारतनुत्वाय । ७ प्रसरन्ति । ८ विमलयन्ति । ९ शतशो धयन्ति इति सम्भाव्यते तथा च धयन्ती पिबन्तीत्यर्थः । १० अधः कुर्वन्ति । ११ प्रीणयन्ति ।

ये संयम समितिभिश्च सभाजयन्ति,[1]

ते सिद्धिमाऽऽशु जिनराज ! सभा!ऽज ! यन्ति ॥२५॥

*यः सर्वकल्मषमलोपरमोदकेन,

हृष्टो जिनौघ ! भवता परमोदकेन ।[2]

तेनाऽऽप्यते मुखभरः परमो दकेन,

धर्मद्रुमेऽद्रु तगुणैः परमोदकेन[3] ॥२६॥

मोहार्ऽदितः सकलभावविभास ! मानं,

प्राप्तं सतां नतवितीर्णशुभा!ऽतमानम् ।

लब्ध्वा जिनाऽऽगम ! महानयभासमान,

त्वामद्य दुस्तमतमो हिमभासमाऽऽनम्[4] ॥२७॥

या भाति नौः सकलशास्त्रसरस्वतीव,

क्रीडां तनोति जिनवक्त्रसरः स्वतीव ।

विश्व पुनाति च सुपर्वसरस्वतीव,[5]

देयादियं सुखशतानि सरस्वती वः ॥२८॥

[अथ प्रशस्तिः]

[6]इत्यस्ताऽपरदेवसुन्दरमहः श्रीणां विलासाऽऽलया,

राकानिर्मलसोमसुन्दरयशः शुल्लीकृताऽऽशा च या ।

नूताः श्रीऋषभाऽऽदिवीरचरमाः सार्वश्चतुर्विंशति—

स्तन्यासुर्मम मुक्तिलम्भनचणां चारित्रलक्ष्मी पराम् ॥२९॥

---

१ सवयन्ति । * प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिपञ्चविंशतिका भवति । २ प्रकृष्टो हर्षं सुखं च यस्य तेन । ३ परेषा मोदकेन । ४ जीवितवान् । ५ गङ्गेव । ६ मुद्रितग्रन्थे तु "इत्यस्तेतरेति" ।

पू० मुनिराज श्री मेरुविजयजीमहाराज–प्रणीता–यमकबद्ध–

# स्तुतिचतुर्विंशतिका

(द्रुतविलम्बितवृत्तम्)

ऋषभदेवमह महिमाऽऽलयं, हृदि धरामि धराधवमाऽऽदिमम् ।
महति मानवमानसमानसे, कलमरालमरातितरुद्विपम् ॥ १ ॥

भजत तं जगतीजनबान्धवं, मनुजवारिजवारिजबान्धवन्[1] ।
यमजितं जिनराजमपूजयत्, सुरविभूरविभूरगभूषणम् ॥ २ ॥

अतुलजन्तुमलक्षयकारिणी, विबुधवृन्दमुद प्रवितन्वती ।
तवक शम्भव ! कीर्तिततिर्नभः–सरिदिवारिदिवाकरजार्जन ॥ ३ ॥

भवतु भावजुषामभिनन्दनः, शिवसुखाय सुधाशननन्दनः ।
यमुपलभ्य जयन्ति नमन्नरा–वनिधन निधन मुनिमानवाः ॥ ४ ॥

श्रयति यः सुमतीशपदद्वयं, मधुलिहां पटलीव सरोरुहम् ।
श्रितवतां सुकृताभ्यतिदुर्लभा, समरसामरसामजता भजेत् ॥ ५ ॥

धरधराऽधिपवंशमबोधयत्. विबुधपद्धतिकेतुरिवा[2]ऽम्बुजम् ।
हरतु मे स जिनः कमलासरो–रुहसरोरुहसरोगमतिभ्रमम् ॥ ६ ॥

जिन ! सुपार्श्व ! पुनन्तु पुनर्भवाः. पदभवा भवतश्चयमङ्गिनाम् ।
जनमनोऽम्बुजवाञ्छितसाधने, सुरतरो ! रतरोगभिषग्वर ! ॥ ७ ॥

दिशतु नित्यसुखं शशिलाञ्छनः, स महसेननरेशसुतो जिनः ।
मनसि यस्य सरोरुहलोचना, न पदमाप दमाऽमृतसागरे ॥ ८ ॥

---

१ सूर्यम् । २ कान्तिः ।

अटति तन्निकटात् कटुरन्धता, करटिनां घटनेव करिद्विषः।
स्मरति यः सुविधेरभिधां सुधी-र्वरविधेरविधेर्वधसाधनम् ॥९॥

दृढरथाऽऽत्मज ! शीतलतीर्थकृत् !, सुकृतिनां सुकृतानि कुरु प्रभो ! ।
मुनिसमाजभुजङ्गभुजाऽन्तरे, घनसमान!समाऽऽनतमानव ! ॥१०॥

भवति तस्य सभाऽङ्गणगामिनी, शिवरमा नृपतेरिव वाहिनी ।
वहति चेतसि विष्णुमहीपते-र्जननकाननकाम्यघनं जिनम् ॥११॥

विजयतां वसुपूज्यनृपाऽऽत्मभू-रजनि राजविराजिगुणैकभूः ।
भवदवासमधामपगासने, घनरसो नरसोमसुरैः स्तुतः ॥१२॥

तमनुयान्ति कलाः सकला कलाः कुमुदबन्धुमिवाऽमलदीधितिम् ।
विमलतीर्थपतेर्विमलैर्गुणै-र्निचितमञ्चितमह्लिसरोरुहम् ॥१३॥

नमदमन्दपुरन्दरमौलितः, पतितदामपवित्रितपत्कजम् ।
वितरतु त्रिजनज्जनतेप्सित, हितमनन्तमनन्तजिनः सताम् ॥१४॥

मनुजजन्म विहाय महोदय, समधिगच्छति मुक्त इवाऽऽस्पदम् ।
कुलिशलक्षण ! यत्र जने त्वया, मुनिहित निहित नियमव्रजम् ॥१५॥

जिनपतिस्तमसां ततिशान्तये, स भवताद्भविनां मृगलाञ्छनः ।
वसुमतीतिलकप्रतिमः प्रभू-रुचिरयाऽचिरया सुषुवे सुतः ॥१६॥

जगति योऽशमशत्रुममीमथत्, प्रमथनाथ इवाऽन्धकमुत्तमम् ।
दिशतु कुन्थुरकुण्ठिततेजस, मुदमरन्दमरञ्जितदैवत. ॥१७॥

कनककोकनदप्रतिमद्युतिं, वदनकान्तिजिताऽमृतदीधितिम् ।
अतुलमङ्गलकेलिकुलाऽऽलय, जिनमर नम रञ्जितविष्टपम् ॥१८॥

प्रथयतु प्रथितां जगता श्रिय, स जिनमल्लिरमन्दगुणाऽम्बुधिः ।
मधुरधीरवधीज्जनकेसरी, जगति दुर्गतिदुर्धरसिन्धुरम् ॥१९॥

भगवता भवभीमतरङ्गिणी-प्रणयिनस्तटम प्यतिदुस्तरम् ।
स मुनिसुव्रत ! सद्व्रतमङ्गिना, वितर सातरसारुहवारिद ! ॥२०॥

जिनमणिर्नमिरस्तु महामुदे, मतिमतां परिनुन्नविपत्तमाः ।
शममहामकराऽऽकरचन्द्रमाः, समहिमाऽमहिमाऽऽपगमार्यमा ॥२१॥

यदुकुलाऽम्बरभासनभास्करोऽ-जनि शिवानि शिवातनयः सृजन् ।
नयतु नेमिजिनो जिनसम्पदं, सुजनमञ्जनमञ्जुतनुत्विषिः ॥२२॥

निरलुठत् कमठं हृढतः शठं, जरठकन्दमिवाऽऽशु परश्वधः ।
पवनभोजनराजिनिषेवितं, धुतमदं तमदम्भमहं श्रये ॥२३॥

चरमतीर्थपतिर्जगतां पति-र्जनयतु त्रिजगद्गुरुतां स नः ।
सुरगिरौ स्नपितः सुरराशिना, सहरिणा हरिणाऽधिपलाञ्छनः ॥२४॥

[a]सकलभव्यतमोभरभास्करा, जनचकोरमुदेकनिशाकराः ।
तनुमतां नमतां ददतां श्रियं, जिनवरा नवरागविदारिणः ॥२५॥

नयवितानमणी रमणीयतां, विदधतं गमभङ्गसमाऽऽकुलम् ।
भगवतां सकलाङ्गभृतां दया-रसमयं समय जलधिं श्रये ॥२६॥

जिनपदाऽब्जपरागमधुव्रता, कविकुलाऽऽम्रविलासवनप्रिया ।
शमयतामशिवं शिवकारिणी, श्रुतसुरीतसुरीजनमुख्यता ॥२७॥

[ अथ प्रशस्तिः ]

इति जिना विनुता मुनिमेरुणा, विजयसेनगुरोः क्रमसेविना ।
विदधतां प्रणतिं दधतां सतां, शिवरमा वरमानवमानिताः ॥२८॥



पू० मुनिराजश्री हेमविजयजी महाराज-प्रणीता-यमकबद्ध-

# स्तुतिचतुर्विंशतिका

(द्रुतविलम्बितवृत्तम्)

श्रियमशेषसुरासुरशेखर-क्षरदपारसुमैः कलितक्रमः ।
दिशतु वः करुणारससागरः, स वृषभो वृषभो वृषभोगवान्[1] ॥ १ ॥

तमजित जितशत्रुधराधिपाऽ-न्वयकुशेशयभानुमभिष्टुमः[2] ।
स्मरधुर हृदि न प्रभुरस्मर-न्नरमणीरमणीरमणीयताम् ॥ २ ॥

गतरमा वसुधा न सुधास्वधा-च्छ्रितसुरासु भुजङ्गभरासु च ।
कुरु दृश मयि शम्भव ! धीरता-नवविभो ! गवि भोगविभोर्जितः ॥ ३ ॥

अलिरिवाऽम्बरहे कमलाऽऽलयो, वसतु वः स मनस्यभिनन्दनः ।
कृतिततिर्यमजर्यधियां[3] लस-न्महसमाऽहसमाऽऽह समाऽऽस्पदम् ॥ ४ ॥

मृगदृशां न दृशामवलोकनै-र्मनसि यस्य तव स्थितिरादधे ।
सुमतितीर्थपते ! त्वमसौ सतां, कुलमवालमवालमवामदृग् ॥ ५ ॥

त्वमिव ता अभिवन्दितनन्दिता-स्तनुमतामहरन्नघधोरणीम् ।
जिन ! भवान् विजहार यकासु स-द्वसुधरासु धरासु धरात्मज ! ॥ ६ ॥

तरुरिव द्युसदां स समीहित, दिशतु वः पृथिवीतनुभूर्जिनः ।
यमवलोक्य समे रसमाऽऽश्रयन्ननवम नवमं[4] नवमङ्गिनः ॥ ७ ॥

भवतु वः परमाय रमाऽऽरमज-स्मयकृताऽपगताऽऽशयकौतुकः ।
स्मितदृशां[5] निकरे रजनीकरो-पमहसे महसे महसेनसूः ॥ ८ ॥

---

१ धर्मराज्यवान् । २ कमलभानुम । ३ मैत्रीमतीनाम् । ४ अनवमं-प्रधानम् । ५ अवचूर्य 'मृगदृश--' ।

अमकराङ्कममन्यत यं जनः, शिवरतेर्मकराङ्कमपीश्वरम् ।
सृजतु वः स मुखं सुविधिर्धु त-स्मरमपारमपाऽऽरमपास्तभीः ॥९॥

अजनि या ध्वजिनीव विरोधिना-मभिभवं य नयैर्द्विरदैरिव ।
दिशतु सा तव शीतल ! गीः सुखं, घनममानममान ! ममाऽक्षयम् ॥१०॥

अनुचरेष्वणुक गुणधोरणी-मणिमहाकर ! विष्णुनृपात्मज ! ।
प्रकटितोत्तमधर्मपथोल्लसद्विनय ! मानय मा नयमाऽऽश्रय ! ॥११॥

कथमुशन्ति नते सविडम्बनां, हरिहरादिविभू तमनारतम् ।
जिन! जयाऽङ्गज! यैर्जयिनी यशः-स्वनिरमा निरमानि रमाऽत्र ते ॥१२॥

विमलता विमल नयताजिन !, कतकचूर्णमिवाऽम्बु 'स हृत्सताम् ।
स्त्रकनघा यमभूषयदुच्छ्रिता, भ्रमरवामरवाऽमरवासवैः ॥१३॥

जगति यद्वचसां निचयोऽशुभा-निवमनस्तमसस्ततिनाशकृत् ।
हृदि वहे नवहेमरुचिं शम-श्रितमनं तमनन्तमनहसम् ॥१४॥

यमधिगम्य जनो जडता जहौ, सुमनसां हितमीशमिव त्विषाम् ।

[1]दृभतु ते जिन ! धर्म ! वचश्चय', श्रियममाय ! ममाऽयममा सुखैः ॥१५॥

महनिशान्तमशान्तिनिशाऽन्तकृत्सुखकृदस्तु स शान्तिनभोमणिः ।
यमबुधज्जन ईप्सित उल्लसद्-द्रुगमरागमरागमराद्रिहम् ॥१६॥

स जिनकुन्थुरपास्त तमास्तमा-पतिरिवामृतसूर्भवतात्सतम् ।
यतिततिर्यमनङ्गनिषूदने, हरमुदारमुदाऽरमुदाहरत् ॥१७॥

जलनिधेर्दुहितेव यदीयवाक्, समभवत्पुरुषोत्तमवल्लभा ।
कुरुत तं विततं ददतं जना !, वशमरं शमरं शमरञ्जितम् ॥१८॥

---

१ शर्मसवलितां कुरुतात् । २ अमराग-कल्पवृक्षम् ।

स सफलां फलिनीदलनीलरुक्, सृजतु मल्लिजिनः कृतिनां स्पृहाम् ।
नवममा ऽऽपदनाप्ययमृद्धिभूः[1]—घनरसं न रसं नरसन्ततिः ॥१९॥

स कलहंस इवामलपक्षभाक्, श्रयतु हृत्कमलं मम सुव्रतः ।
मतिरमोहि न यस्य दमा ऽऽदरो-त्सवलयाऽबलया वलयाऽऽढ्यया ॥२०॥

सुरगवीव समीहितसम्पदां, भरमसूत यदीयमुदीक्षितम् ।
जिन नमे ! ऽस्तु मुदे दृगसौ दित-भ्रममताऽममता मम तावकी ॥२१॥

नयतु नेमिजिनः परमां मुदं, स जनमञ्जनमञ्जुरमन्दगीः ।
निहतवानिह यो युवतिस्मित-स्मयमकायमकाऽयमकारणम्[3] ॥२२॥

अनयनैरिव तैः किमुदीक्ष्यते, शिवपथः प्रथितः पृथुविभ्रमैः ।
उरसि पार्श्व ! वचांसि महांसि ते, न निहितानि हितानि हि तात ! यैः २३॥

सुरसरोजदृशां निवहैर्गुणा, विदधिरे वदनाऽतिथयस्तव ।
स जिनवीर ! सुखाय जिनस्मरा ऽ-भिभवलोभवलो भव लोकराट् ! ॥२४॥

कनककैरवविद्रुमवारिमुग्, मरकतद्युतये नतिरस्तु मे ।
भगवते प्रकटीकृतसद्गमाऽऽश्रयनयाय नयाऽयनयायिने ॥२५॥

*जयति निर्जरकुञ्जरधोरणी-मुकुटकोटिनिघृष्टपदद्वयी ।
जिनततिः कुनयैककुशेशयोत्करतमाऽरतमा[4]रतमाश्रिरम् ॥ २६ ॥

---

१. न आपत्–न लेभे ॥ २. संयमभूमौ जलम् ॥ ३ दुःखाऽविरतिकारणम् ॥ *प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिपञ्चविंशतिका भवति ॥ ४ मैथुनहिंसाऽज्ञानानि यस्यां सा ।

सदनरत्नकरैरिव यद्वरैः, सुखमलक्षत वर्त्मशिवं नरैः ।
भगवतां कुरुतां स गिराम्भरो, मुदमितां दमितां दमिताऽङ्गजाम् ॥२७॥

सुमनसां सदृशां निचयो जिन–प्रवचनैकपयोरुहषट्पदः ॥
स्मर इवैणदृशां मतविग्रहः, शुभवतां भवतां भवतां मनः ॥२८॥

[ अथ प्रशस्तिः ]

इत्थं प्रार्थितमर्थसार्थमनघं यच्छन्त एते चिरं,
जीयासुर्वृष–भादयो जिनवृपाः काव्यैरमीभिः स्तुताः ।
सौभाग्यादिव सुभ्रुवः सरभसं क्रोडे लुठन्ति स्वयं,
यद्ध्यानान्मणिमन्त्रहेमविजयाऽऽनन्दादाऽऽदि–सम्पत्तयः ॥२९॥

---

पू. मुनिराजश्रीन्यायसागरजीमहाराज–प्रणीता–यमकबद्ध–

# स्तुतिचतुर्विंशतिका

(द्रुतविलम्बितवृत्तम्)

विभवदो भवदोषमपाहरन्, मघवताऽघवतामपि योऽर्चितः ।
विनयिनां नयिनां धुरमाऽऽवहन्, शमवतामवतात् ऋषभस्स वः ॥१॥

अजित ! भाजितभास्कर ! साधुभि–र्विजयतां जयतां दधदाऽऽदृतम् ।
अविरतं विरतं भृशमंहसो, भविहितं विहितं तव शासनम् ॥२॥

जिन! वहे नवहेममनोहरं, सुहृदिसं हृदि सम्भव! मूर्त्तिमत्!
तव महोऽवमहोमहदानना!ऽ—वनमहीनम—हीनचतुष्टयम् ॥३॥

अमलया मलयाचलचन्दन—प्रतिमयाऽतिमया जगद्-व्यते।
तव गिराऽव गिरावुदितस्तुते—र्नृवर! संवरसम्भव! मामतः ॥४॥

वसुमती सुमतीश! तमोभरै-रविमला विमला ससृजे क्षणात्।
शुभवता भवता पदपङ्क्तिभि—र्मृदुरवा दुरवापगुणान्विता ॥५॥

धरज! सारज! साधुविबोधनै—रविकलं विकलं विषयादिभिः।
स्मरमते रमतेस्म मनागपि, जिन! मनो! न मनोज्ञतनोस्तव ॥६॥

समनुतां मनुतां तव शिष्टिकां, समुदितासुदिताऽऽगम! युक्तिभिः।
भुवि जनो विजनोदयदर्शिनीं, नवसुधां वसुधाऽङ्गजतीर्थकृत्! ॥७॥

धवलिमाऽऽवधलिमा दधते तना—वपरुषेऽपरुषेष्टगिरे नमः।
समहसे महसेननृजन्मनेऽ—रतिभिदेऽतिभिदेलिमकर्मणे ॥ ८ ॥

सुविधिना विधिनाऽवैधि कर्मणां, समुदयो मुदऽयोघनताडनैः।
प्रवचनावचनेन नृणां कृतो—प्रकृतिना कृतिनाऽऽशु सितत्विषा ॥९॥

वसुपते!ऽसुपते!ऽसुमतां सुरै—र्वितरणे तरणे! भविबोधने।
कृतवशी तव शीतल! वाग्भरो, वसुतरान् सुतरां कृतवान् जनान्। १०॥

समुदिते मुदिते!ऽत्र भवाऽन्तकृत्, शुचिरसं चिरसञ्चितपाप्मनां।
जिनमतं नमतं तनुमानसे!, त्वमनि वामपि वाग्! नम वैष्णवम् ॥११॥

---

१ ज्ञानादि हृत् यः, इः—कामः तं स्यति। २ अनन्तज्ञानादिचतुष्टयम्। ३ अङ्गिकुरुताम्। ४ हतः। ५ सुवर्णदाने।

मम तमोमतमोहनिशाभवं, सुवसुपूर्वसुपूज्यनृपाऽऽत्मभूः !
अरुणभारुणभा!ऽऽग्रहकौशिक—व्रजहितं जहि तन्त्रविदांवर ! ॥१२॥
तव करोऽवकरोपममन्मथाऽ—पनयने नयनेत्र ! महेशताम् ।
विमल ! तामलताप ! समागम—चरणदो रणदोषपराङ्मुखः॥१३॥
अभयदं भयदम्भनिवारिणोऽ—तिसुयशाः सुयशःसुत ! देशना ।
सुरवधूरवधूय भवव्यथां, सुनय ! ते नयते स्म शिवं क्रमात् ॥१४॥
शिवसुखं वसुखण्डतनुप्रभ !, पदमितं दमितं नृविसर्जने ।
सुरमणी-रमणीवरसुव्रता-तनयतां नयतां दधदाऽऽस्तराट् ! ॥१५॥
अपरमा परमार्थवती त्वया, कविहिता विहिता विहिताऽगसम् ।
वसुमती सुमतीश ! समुद्धर, तदचिरादचिराऽऽत्मज ! मां भवात् ॥१६॥
कपिहिता पिहिताऽऽश्रव ! सद्गुणै-रविहिताऽविहिताऽन्यसुराऽऽवली ।
सकलधीकलधीरप ! ते स्तंभा-ङ्क ! मलिना मलिनीकृतभूतला ॥१७॥
सुहृद—यं हृदयङ्गमदेशनाऽ—मृतरसं तरसङ्क । निपीय ते ।
भविजनो विजनोदितभक्तिभा—गमरतामर ! तापहरा!ऽगमत् ॥१८॥
विभवदे भवदे निपलक्ष्मगा!ऽऽ-गमरसेऽमरसेवित ! मज्जताम् ।
तव नतावन ! तारक ! मे मनोऽ-निशमिदं शमि दम्भमदाऽपहे ॥१९॥
अभिनवोऽभिनवो मुनितीर्थकृत्—हिमकरोऽमकरोदयनिर्गतः ।
सेमुदितो मुदितोदितमङ्गिनं, प्रकुरुतां कुरुताऽम्बुहृदन्वहम् ॥२०॥
विभवयाभवयाचितविग्रहो, विजयभूर्जयमूर्जितसद्गुणः ।
असुभृतां सुभृतां श्रियमाऽऽददा-वभयदो भयदोषहृदाऽऽगमः ॥२१॥

---

१ ग्रामम् । २ मस्तकेनाऽऽच्छादिताः । ३ छागाऽङ्क ! । ४ कुम्भाऽङ्क ! । ५ त्रिकरणस्तुत्यः ।

मुदमिता दमिताऽरिगण ! त्वया, कविदधे विदधे स्वगिरां गुणैः ।
त्रिभुवने भुवनेश ! समुद्रजा!ऽ-र्जुनयशा ! नयशासन ! मेदिनी ॥२२॥
अविभवैर्विभवैस्त्वनुजीविनः, प्रभुतयाऽद्भुतयाऽकृषत त्वया ।
तव संभाव ! समा भुजगाऽङ्क ! त-द्वितर मेऽतरमे!-हितमक्षरम्॥२३॥
सकलधौ कलधौततनुद्युते!ऽ, रसैं ! मतौ समतौघ ! रमस्व मे ।
परमदोऽरँमदोष ! मृगाऽधिप-ध्वज ! वरं जवरञ्जितविष्टप ! ॥२४॥
जिनवरा नवरागभरेण के, धवलितं वलितं वृषकर्मणि ।
जगदिदं गदि दम्भहृतेश्च नो, विदधिरे दधिरे चरणश्रियम् ॥२५॥
असमये समयेन हि चक्षुषा, समतया मतया जगदीक्षितम् ।
पुरिवरेऽरिवरेऽपि सँना त्वया, शमयताऽऽमयतापभरान्विभो !॥२६॥
निजगदे जगदेकजिनेन हे !, समहिता महिता श्रुतदेवता ।
सकमला कमलाऽक्षि ! निरन्तरं, जनवरं नवरं वितरे-हितम् ॥२७॥

[ अथ प्रशस्तिः ]

इत्थंकारमकारि तीर्थपगणः स्तुत्यः स्तुतेर्गोचरः,
पद्माम्भोनिधयः स्वतन्त्रकुशलाः स्फूर्जद्यशोलब्धयः ।
श्रीधीरोत्तमसागराऽऽह्वगुरवः तच्छिष्यवर्गाऽणुना,
न्यायाम्भोनिधिना पुनः प्रतिरियं नीताऽक्षरन्यासताम् ॥२८॥

---

१ मुदिता कृता । २ सर्वानवतीति । ३ नास्ति शृङ्गारादि रसो यस्य । ४ अत्यर्थम् । ५ प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिपञ्चविंशतिका भवति । ६ रोगसहितम् । ७ सदा ।

## पू. मुनिराजश्रीशान्तिचन्द्रमहाराज-प्रणीता-यमकबद्ध-

# स्तुतिचतुर्विंशतिका

( द्रुतविलम्बितवृत्तम् )

जय वृषध्वज ! मञ्जुवृपध्वज !, प्रियवृषध्वज!साध्वजसाध्वज ।
ध्वजविकारकरध्वजपाणिजि-ज्जितमदध्वज ! युग्मिजनध्वज ! ॥१॥

गजगते!ऽङ्कगज ! मपुञ्जज !, व्यपकलाकदलीकवले गज ! ।
अजित!भाजितभास्वरभर्मभा-जितमतागपवैव भवादित ॥२॥

हरिकलङ्क!कलङ्ककलाकदा, जितजितारितनूरुह!नो रुह ।
सभव शम्भव शाम्भवदेव ! मे, भवभयानि निरस्य तु पश्य माम्॥३॥

प्रवरसंवरसंवर-संवर-क्षितिपनन्दनवागभिनन्दन ! ।
सदभिनन्दननन्दननन्दितः, स भवति श्रयती-न ! भवन्तं मे ॥४॥

कुगगहाऽङ्क!महामहमङ्गला-तनय!मानयमानयमायवन् ।
असुमते ! सुमते ! सुमते ! मते-रुदयमो वितराऽमलमेघभूः ॥५॥

विकचकोकनदाऽमृतदीधिते !, कुकुकोकनदामृतदीधिते ! ।
तव निदेश उवाभरणीकृतः, स लभते भरणाभरणाकरम् ॥६॥

सुरतरूपमपार्श्वसुपार्श्व ! ते, फणमणिरमणीयघृणीतते ! ।
पदकजं वरिवस्यति पश्यति, स्वरपुनर्भवशर्म स शाश्वतम् ॥७॥

शिववधूपयमद्विज!सद्विज, द्विजपते द्विजपद्विजवद्विमुग् ।
द्विजपतीति कलङ्ककलङ्कक्र–द्विजपतीतिरमाधिपते जयो ॥८॥

मकरकेतुसुरूपविनिर्जितो–न्मकरकेतुमहोमकरस्य ते ।
गुणमणीमकराऽऽकरशासनं, मयि महं तनुतेऽतनुतेजसा ॥९॥

प्रशमशीतलशीतल ! शीतल–क्रमकजं क्रमते कमलाऽऽवलीम् ।
त्विडतिरिक्ततयेव महर्द्धिकः, सुरवरोऽल्पतरर्द्धिकमीशते ॥१०॥

प्रथमविष्णुविवर्णितवर्णवित्, प्रथमविष्णुजविष्णुजवर्णवित् ।
विशदवर्णविवर्णभवादवा, करणवर्णबिवर्णितवर्णवित् ॥११॥

वसुरसोद्रुमणी च कविद्रुमा, वसुवसोधवसूदकवस्वमो ।
सुवसुपूज्यविभो वसुपूज्यजा, स्मरणतस्तव सिद्धिरवाप्यते ॥१२॥

भुवि यदाऽऽननपद्मनदोद्भवा वचननाकिनदी नरनाकिनः ।
अति पुनाति सनातनसाब्जिनी–रविमलं **विमलं** महतां गतम् ॥१३॥

स्नपयति स्म सुधाऽशनसंहति–र्यमवितीक्षरसत्कशसंहतिः ।
नवनवैर्महनैर्वत मन्दते, तमभिनौमि मुनीनमनन्तमा ॥१४॥

विदितहृच्छयधर्मविधर्मवित्, प्रकरपासविधर्म–सुधर्मदृग् ।
वितर धर्ममुधर्मकधर्मक, प्रकटिताऽर्हतधर्म **सुधर्मकृत्** ॥१५॥

अवितशान्तिपदं कुरु नीवृतां, प्रचुरशान्तिकरोत्करकर्मभित् ।
प्रथितशान्तिरसो रसरञ्जजि-ज्जयतु **शान्तिजिनो** जिननिर्मलः ॥१६॥

भुवि दिवि त्रसतश्शरणार्थिनः, शरणमङ्कमिषाददादद: ।
अशरणस्य पशोरपि यः प्रभुः, शरणमाश्रहमप्यथ यामितम् ॥१७॥

चरणमारमणीरमणीयपू–रमणशिष्टिररो रतिदा यथा ।
मम तथा न सुरद्रुगवीलता–सुरमणीरमणीरमणीयता ॥१८॥

अघघटाघटघाटघटाश्रणि–र्घटघटोऽङ्घटोघटघट्टनः ।
अघटितानघटिष्ट घनानघाऽनघहरन्तमुमल्लिमुपास्महे ॥१९॥

घनरसोघघनाघनभूघनां, ककमठाकमठाकमठाकृति ।
त्वदुपचारपरा नरपुङ्गवाः, सुविलसन्ति सुराक्षरसम्पदा ॥२०॥

विजय भूत्तम ! भूत्तमभूत्तम–त्विडसितोत्पलचिह्न ! नमे ! न मे ।
किमपि वाचमृते तव रोचतेऽ–मृतभुजामिव पादजलाऽऽदिकम् ॥२१॥

वृजिनदृग् ! वृजिनाऽपनिनीषया, शिवरमण्युपयामचिकीर्षया ।
भगवता विनवीनकनी नवा, जगति येन स नेमिरितोऽवतात् ॥२२॥

प्रतिमया प्रतिमो महमैकया, प्रतिमया प्रथितस्सदनेकधा ।
तव विभो ! भुवि चन्द्रसुपेटया, सुरभिगन्ध इवाऽऽप्त पदायसा ॥२३॥

स्वसरलोरुविगोपितवीरधा, विजितकर्मकुवीरनृवीर ! हे ! ।
परमवीरनिरस्तड वीर ! मे, घमघवीर कुरूरु–शिवश्रियम् ॥२४॥

भगवतामवतामवतो नतिं, च्यवनजव्रतकेवलमुक्त्यव ।
रथदनिनीत्थ कयत्थकमर्थिनां, तनुतपोत्सवशूकजमार्हणाः ॥२५॥

*तविषतिर्यगधोभुवनस्थिता, नरमरुत्सदकृत्रिमकृत्रिमाः ।
महदनागतभूतभवन्त ओ !, ददतु तीर्थकृतो मम निर्वृतिम् ॥२६॥

---

*प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिपञ्चविंशतिका भवति।

गणकगौतमवागनुयोजना, गमगमागमगम्यगमो गमात् ।
भविजनो लभतेऽप्सितमागमाद्, युगलिलोक इव त्रिदिवागमात् ॥२७॥

जिननियोगनियोगनिषङ्गिणां, प्रवचनाऽऽहितप्रवणश्च मे ।
शमयतामुपरागममङ्गलं, प्रथयतु प्रथमेश्वरधीश्वरः ॥२८॥

[अथः प्रशस्तिः]

इति यतीनजिना ऋषभाऽऽदयः, सुतपभानु-विनेयक-शान्तिना ।
कृति-कृते पृथुकेन मयेडिता, ददतु शाश्वतशर्म महोदयम् ॥२९॥

# अज्ञातकर्तृ-यमकबद्ध-
# चतुर्विंशत्यादि जिनस्तुतयः।

( मालिनीवृत्तम् )

सकलसुखनिदानं, भक्तिमत्कोविदाऽऽन-
न्दनमसुपथदानं कर्मकन्दाऽवदानम्
सुरभिमृगमदानं, मारुदेवं सदाऽन-
न्तनयविहितदानं, नौमि कन्दर्पदानम् [1] ॥ १ ॥

निखिलगुणनिधानं, मुक्तिकान्ताऽवधानं,
वरशर्मथविधानं, सिन्धुराऽङ्कप्रधानम् ।
परिहृतपरिधानं, ज्ञानलक्ष्मींदधानं,
नमत सदभिधानं, पापहृत्संनिधानम् ॥ २ ॥

प्रमुदितवरसेनः, प्रास्तपुष्पेषुसे-नः,
पृथुतरतरसे-नः, शम्भवः श्रेयसे नः ।
चरणनतरसेनः, पुण्यलक्ष्मीरसेनः[2],
कपटशकटसेनः सौम्यहृत्सारसेनः ॥ ३ ॥

पृथुकुमतकुरङ्ग-प्राणपीडाकुरङ्ग-
प्रभुसदृशनिरङ्गः, सिद्धियाने तुरङ्गः ।
विगतयुवतिरङ्गः, सम्पदायै तुरङ्ग-
ध्वजजिनपरिरङ्गः, कीर्तिगङ्गातरङ्गः ॥ ४ ॥

---

१ शान्तिविधायकम । २ समुद्रः ।

सितरुचिघनसार–स्फीतकीर्तिप्रसारः,
प्रतिघभुजगसार–छेदने पक्षिसारः ।
दिश सुमतिरसाऽऽरः, स्थैर्यधूताऽद्रिसारः,
शमसमशमसारः, पुण्यपाथोविसारः ॥ ५ ॥

भविकभविकपद्मः, शोकसन्तापपद्म–
व्यतिकरवधपद्मः, द्वेषिसंशोभिपद्मः ।
जय किशलयपद्मः, श्रीजिनाधीशपद्म–
प्रभ ! मुनिजनपद्म–प्रीणनांऽशुर्विपद्मः ॥ ६ ॥

भवभयतिमिराग–स्त्यक्तसंसारराग:,
श्वसितजितपरागः, स्वस्तिकाऽङ्को निरागः ।
जिनपतिरसुरागः, द्वेषिवल्लप्ताऽङ्गरागः,
सुखय सुखसुरागः, पापचन्द्रोपरागः ॥ ७ ॥

अपहृतपरभावः, श्रीशचन्द्रप्रभाऽव,
प्रथितपृथुविभाऽव-ज्ञातससारभावः ।
मदनमदविभाव–स्वन्तकारीस्वभावः,
सुकृतिकृतिशुभाऽऽवः, सार्वमासुप्रभावः ॥ ८ ॥

श्रय मनुज ! निरामं, पुष्पदन्तं विरामं,
कुमतिपथविरामं, नम्रदेवारिरामम् ।
निचितमुदितरामं, लास्यलक्ष्केशरामं,
गतरतसमरामं भूरिशोभाऽभिरामम् ॥ ९ ॥

---

१ मत्स्यः । २ निधानम् । ३ सर्पः । ४ कल्पवृक्षः । ५ परशुरामम् ।

नमदमरनिकायं, शीतलं काम्यकायं,

दितनरनरकाऽऽयं, सद्यशः कारकाऽयम् ।

प्रणमत भविका यं, प्रास्तवीत् शस्तकायं,

सुरततिरनकायं, भाजितस्वर्णकायम् ॥१०॥

भज जन! परमेनं, विष्णुजन्मानमेनं,

कुसुमधनुहमेनं, नम्रकम्रक्षमेनम् ।

वदनजिततमेनं, वारिशर्मागमेनं,

तमविरतितमेनं, कष्टतारिष्टमेनम् ॥११॥

अतिशयबलकाम–व्यासिसनासिकाम–

द्विडंदरनरकाऽमः, सिद्धिसौधेऽतुंकामः ।

मम मनसि निकाम–प्रोल्लसत्कीर्तिकामः,

त्रिभुवनतिलकाऽऽम!, त्वं महाङ्काऽस्तकामः ॥१२॥

असमशमथभोगं!, सत्त्वसङ्घातभोगं,

निजजननभोऽगं, त्वां स्तुवेऽसम्प्रभोगम् ।

विमल! विमलभोगं, प्राप्तकैवल्यभोगं,

चरणनतनभोगं, पापपांशौ नभोगम् ॥१३॥

जनकजसवितारं, चारुचारित्रतारं,

निज हृदि कुरुताऽरं, श्रीअनन्तं गताऽऽरम् ।

विधुरितकुमताऽऽरं, भाऽस्तभूयोवतारं,

कुवलयशितितारं, कीर्तिपूराऽस्ततारम् ॥१४॥

---

१ स्वभावम् । २ वायुम् । ३ रजतम् ।

शिवपदमसुमन्तं, योऽनयन्नीतिमन्तं,
विरतिविरतिमन्तं भानुसूनुर्नमन्तम् ।
भज मनुज ! वमन्तं, प्राज्ञपद्मांशुमन्तं,
वृजिनमनवमं तं, संनमद्भूमिमन्तम् ॥ १५ ॥

प्रबलगुणनिशान्तं, मोहनिद्रानिशान्तं,
कृतविरसदशाऽन्तं, स्तौमि शान्तिं प्रशान्तम् ।
गतमदनवशाऽन्तं, प्रोन्नमद् द्यो निशान्तं,
जिनपमसदृशाऽन्तं, भव्यसेव्याऽकृशान्तम् ॥ १६ ॥

रतिरतिरतिनाथः, प्रोन्नमन्नाकिनाथः,
सदतिशयसनाथः, प्रीतिपद्मांशुनाथः ।
मदमधुयदुनाथः, श्लोकनुन्नाऽहिनाथः,
स्मितशशिपशुनाथः, श्रेयसे कुन्थुनाथः ॥ १७ ॥

विषयमिह ममाऽर !, श्रीजिन त्यक्तमार !,
सुततिततिरमार !, छद्मममौघमार ! ।
जय विपदऽदमार !, क्रौञ्चनाशे कुमार !,
प्रदलितविषमाऽर–त्यादिदोषाऽऽगमाऽर ! ॥ १८ ॥

शिवफलविनियोगं, मल्लिनाथं सुयोगं,
त्रिदशधृतनियोगं, हृतदुष्कर्मयोगम् ।
सुकृतभरवयोऽगं, संस्तुवे साभियोगं,
कृतकुगतिवियोगं, ज्ञाततत्त्वप्रयोगम् ॥ १९ ॥

---

१ प्रभातम् । २ स्वरूपम् । ३ आज्ञाम् ।

विगणितभवकारं ध्वस्तमोहान्धकारं,
कविपिकसहकारं, सर्वसम्पत्तिकारम् ।
कृतमदननिकारं, सुव्रतं निर्विकारं,
हृदि धर भविकाऽरं, कृत्तकर्मप्रकारम् ॥ २० ॥
विधुरितरतिकान्तः, संनमद्भूमिकान्तः,
कृतनरत्तरकाऽन्तः, च्छिन्नमौढ्येन्दुकान्तः ।
जिननमिरपकान्तः, श्रेयसे मुक्तकान्तः,
शिवरतिरतिकान्तः, क्लेशमेघाऽहिकान्तः ॥ २१ ॥
विपुलतर—वने मे—रावमर्त्यैर्विनेमे,
मुदितजलधिनेमे, भक्तचित्तैर्नेमे ।
कुमतविपिननेमे, सत्त्वभीकालनेमे,
विथि जिन ! भुवने मे, शर्म दिश्याः स नेमे ! ॥ २२ ॥
धर खग इव पत्त्रं, भोगिधीताऽऽतपत्त्रं,
गतिसितजितपत्त्रं, भीत्यहिश्रीशपत्त्रम् ।
मुखजितशतपत्त्रं, दृग्जिताऽम्भोजपत्त्रं,
स्मयतरुकरपत्त्रं, मर्त्य ! पार्श्वं विपत्त्रम् ॥ २३ ॥
सुरकलितसवेश—प्राप्नुवन्तं स्तुवे शं,
चरमजिनगवेशं, क्रोधभूमृद्धवेशम् ।
प्रकटगुणनिवेशं, प्रोन्नमद्दानवेशं,
स्मयनिचयसवेशं, शान्तशोकप्रवेशम् ॥ २४ ॥

---

१ भवकारागृहम् । २ अखण्डे ।

[1]मनसि जिनवराणां, धेहि नम्राऽमराणां,
शिवतरुमुदिराणां, स्तोममस्तस्मराणाम् ।
भवभयभिदुराणां, सद्गुणैर्मेदुराणां,
गतकुगतिदराणां, देवदत्ताऽऽदराणाम् ॥ २५ ॥

त्रिभुवनविबुधाऽऽरा—मावलीवृद्धिधारा,
धरघनतरधारा, भिन्नमायाभूधारा ।
भवतरुसुधारा—माऽऽप्तवाचाऽसिधारा,
परिगतविविधारा, रातु शं शर्मधारा ॥ २६ ॥

विधुरिव मुखमाया—तीहितार्थगमायाः,
श्रियमतिसुखमायाः, सर्ववित्सङ्गमायाः ।
निरुपममहिमा या—प्रास्तसम्मोहमाया,
दिशतु शुभतमाया, भारती सा रमाया ॥ २७ ॥

---

(२)

( आख्यानकीछन्दः )

*यत्राऽखिलश्रीः श्रितपादपद्म—युगा—दिदेव स्मरता नवेन ।
सिद्धिर्मयाऽऽप्या जिन! तं भवन्तं, युगादिदेव ! स्मरतानवेन ॥१॥
[2]समुद्भवो येन समूलदाहं, देहे सदाभाविजयाऽङ्गजस्य ।
शिवं दिशन्तामजितस्य तस्य, देहे सदाभा विजयाऽङ्गजस्य ॥२॥
[4]चेतस् ! त्यजाऽऽर्तिं स्मरणैकतानं, कल्याणरुच्या भव शम्भवस्य ।
त्वं [5]च प्रभो ! मामनुकम्पयाऽऽशु, कल्याणरुच्याभ ! वशं भवस्य ॥३॥

---

१ प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिचतुर्विंशतिका भवति ।
*पू. आ. श्रीसोमप्रभसूरीश्वराणांकृतिरियम् । २ विपरीताख्यानिकीछन्दः । ३ दग्धः । ४ इन्द्रवज्रावृत्तम् । ५ च शब्दस्य अप्यर्थः ।

श्रीसंवरक्ष्मापसुतस्य भव्य—श्रीभाजनानामभिनन्दनस्य ।
भक्तिप्रभावेन भवन्ति मुक्ति—श्रीभा जनानामभिनन्दनस्य ॥ ४ ॥
यः पावनो हंस इवोच्चतंसं, नालीककान्तं वरमङ्गलाऽङ्गम् ।
तं सिद्धिवध्वाः सुमतिं नमामो, नाऽलीककान्तं वरमङ्गलाऽङ्गम् ॥५॥
त्वं येन मङ्गल्यरमाऽऽलयेन, पद्मप्रभावं दितवाननेन ।
दृष्टे न लोकैः सकलं सुतीर्थ, पद्मप्रभाऽवन्दि तवाऽऽनने न ॥६॥
धन्यः स मान्यो जिन ! कस्य न स्यात्, पृथ्वीप्रतिष्ठात्मजय स्तवेन ।
स्वभारतीं सारवतीं वभार, पृथ्वीप्रतिष्ठात्मज ! यस्तवेन ! ॥ ७ ॥
यद्देहशोभाविजिता गुणेन, चन्द्रप्रभा भासु रराज केन ।
जीया नतः श्री जिनचन्द्र ! स त्वं चन्द्रप्रभाऽऽभासुरराजकेन ॥ ८ ॥
भाव्य यदाज्ञा—विमुखेन खेलन्, मुदा रमायामयशो धनेन ।
तेन त्वया श्रीसुविधे ! सुखी स्या—मुदारमायाऽऽमयशोधनेन ॥ ९ ॥
येनाऽऽपि देहद्युतिडम्बरेण, निष्कोपमा नन्दनशीतलस्य !
तस्योज्ज्वलं कः स्तवने न वृत्तं, निष्कोपमाऽऽनन्द न शीतलस्य ॥१०॥
श्रेयांस ! यस्ते नमने स मोदं, मनोऽरमाभोगतमस्ततान ।
लब्धोदयं चुम्बति सद्गुणाऽऽली, मनोरमाऽभोग ! तमस्तता न ॥११॥
यस्ते विधत्ते पदपद्मसेवां, सदाऽरुणश्रीप्रभ ! वासुपूज्य ! ।
भवाऽर्त्तिगर्तासु बिभर्ति नाऽऽस्थां, स दारुणश्रीप्रभवासु पूज्य ! ॥१२॥
भाव्यं सदा यस्य नमस्यताऽसु—मता पदाऽऽवर्जितवैभवेन ।
दद्याः सुविधा विमलेश ! सत्त्व—मतापदा वर्जित वै भवेन ॥१३॥

---

१ प्रमोदविधातु. । २ विभूषयामास । ३ अङ्ग—कारणम् । ४ उपजातिछन्दः । ५ ववन्ध । ६ चित्तस्थैर्यम् ।

मणीमिवाऽनन्त ! विलोक्य वृत्तो–दारं भवन्तं जिनमीश्वरं च ।
श्रयेत कः काचमिवाऽगुणत्वा–दारम्भवन्तं जिनेभीश्वरं[2] च ॥१४॥
अकारि कण्ठे गुणरत्नमाला, धर्मस्य वर्याऽऽर्यैतिना यकेन ।
लक्ष्मीः सदाऽऽनन्दसुखाय तेन, धर्मस्य वर्याय तिनायकेन ॥१५॥
यस्ते यशस्स्तौति नताऽमरेन्द्र–महीन ! शान्ते घनसारतारम् ।
स्वयंवरा तं वरयत्यपाप–महीनशान्ते ! घनसारताऽरम् ॥ १६ ॥
जनस्य दृष्टे त्वयि यत्र नाशं, समक्षमापालनताऽऽपदेनः ।
गतागते स त्वमपास्य कुन्थो!–ऽसमक्षमापालन!तापदे नः ॥१७॥
येनाऽर ! जज्ञे त्वयि विश्वमाना–विलासमाऽऽलम्बनदे ! नतेन ।
श्रेयस्तरूणां पदमाऽऽपि सश्री–विलासमालं वनदेन तेन ॥१८॥
विश्वत्रयीसौरभकारिकीर्ति–मल्ले ! नमल्लेखपराजिते न ! ।
भक्तेन भाव्यं त्वयि धूतमोह–मल्ले ! नमल्लेखपराजितेन ॥१९॥
यस्ते वचः सुव्रत ! सम्प्रपेदे, महामुने ! शासितमोहराज ! ।
कर्माऽष्टकं विष्टपनिर्मितोद्यन्महाऽमुनेशा!ऽऽसिं तमोहरा!ऽज ! ॥२०॥
त्वद्भक्तिभाजा कुमतानि येन, न मेनिरे ना भवतोऽयदस्य–
समीर ! स स्यात्किमुपेक्षणीयो, नमे ! निरेना भवतोऽयंदस्य ॥२१॥
नेमे ! यया सा रजसेऽपि मेने, न यादवानां परमोदकश्रीः ।
तमोमयानां मतिरस्तु तेऽस्ता–नया दवानां परमोदकश्रीः ॥२२॥

---

१ नारायणम् । २ रुद्रम् । ३ शोभनोत्तरकालेन । ४ °ता°–लक्ष्मीम् । ५ आपत्–प्राप । ६ निराकुरु । ७ जलदेन । ८ आसि–क्षिप्तम् । ९ शुभफलदस्य ।

ज्ञानोदये प्राप्य सुराऽसुरेभ्यः, समुन्नतिं कामदमेन येन ।
मुक्तिश्रिता पार्श्व ! विधेहि सत्वं, समुन्नति कामद ! मे नयेन ॥२३॥

मोहादतीतस्य तवे-श !, वीर ! सुधीर ! सौभाग्यमुदग्रमायात् ।
मुक्त्यङ्गनालोभन ! यः स्तुते स्म, सुधीरसौ भाग्यमुदग्रमाऽऽयात् ॥२४॥

प्रसादतो वः शिवसद्मपद्म–परागपूराः ! जितकाममायाः ।
वृद्धिं जिना यान्तु नितान्तकान्ताऽ–
परागपूराजितका ममाऽऽयाः ॥ २५ ॥

यैस्ते ननाम श्रुत ! मोहरेणु–प्रभञ्जनस्य प्रभवेहितस्य ।
सदा प्रसादं तमसोगभस्ति–प्रभं जनस्य प्रभवेहि तस्य ॥२६॥

यस्तावकं भावयति प्रभावं, पद्मासनाऽऽस्ये ! श्रुतदेवी ! तारम् ।
भयादसौ मोहमयात्स्वमिन्दु–पद्माऽऽसनाऽऽस्ये !
श्रुतदे ! ऽवीताऽरम् ! ॥२७॥

---

(३)

( शार्दूलविक्रीडितवृत्तम् )

पद्मनामिव पद्मबन्धुरुच्चयः श्रेयः प्रबोधश्रियो,
पुंसां यस्य युगादिवासरमुखे कारुण्यपुण्या गिरः ।

---

१ मुक्तिस्थितिरूपम् । २ प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुति-चतुर्विंशतिका भवति । ३ आर्षवृत्त्या रत्नत्रयीप्राप्तिः । ४ कर्माविवक्षायां षष्ठीति विज्ञेयम् । ५ हे प्रभो ! एहि इति पद-च्छेदः । ६ हे चन्द्र ! लक्ष्मीतिरस्कारिमुखे ! ।

आजन्माऽपि महर्द्धिभासुरवरैः प्रारब्धसेवोत्सवं,
वन्दे **नाभिनरेन्द्रनन्दनजिनं** तं देवदेवं मुदा ॥ १ ॥

चिन्तारत्नगुरुप्रसादललितैः प्रस्पर्द्धये वाग्मिकं,
भक्तानां वितथार्थसार्थविषयश्रद्धामवन्ध्यां दधौ ।
यः श्रीमज्जितशत्रुराजविजयादेवीसुतः शाश्वतः,
श्रेयः **श्रीरजितो** जिताऽन्तररिपुः पायाज्जिनेन्द्रः स वः ॥ २ ॥

यत्कल्याणकपञ्चकेऽपि सकलस्त्रैलोक्यलोकश्चिरं,
चक्रे पूर्वमहाप्रमोदस–दने विश्रान्तिमान्त्यन्तिकीम् ।
यद्भक्त्यासदसञ्चरिण्णु च शुभं भूयाद् प्रभावं भवा–
भावायाऽभिनमामि तं जिनविभुं **श्रीशम्भवं** शम्भवम् ॥ ३ ॥

चञ्चच्चम्पककाञ्चनोच्चयमयैः सर्वाङ्गशृङ्गारितं,
शृङ्गारैरिव यस्य गौररुचिभिर्दिक्चक्रबालं बभौ ।
तं सर्वाऽद्भुतभूतकेलिसदनं मोहद्रुनिष्कन्दनं,
वन्दे **श्रीअभिनन्दनं** जिनपतिं वन्दारुसङ्क्रन्दनम् ॥ ४ ॥

निःसीमासमशर्मणि प्रणयिनां जाग्रत्प्रभावप्रभुः,
यो निर्मूलनकर्मणे भवतरोरुद्दन्तदन्तावलः ।
अन्तः शात्रव–संयुगे युगभुजः श्रीक्षांयुगीनो जिनं,
तं वन्दे **सुमतिं** सतां कृतिरतिं देव मनोज्ञाऽऽकृतिम् ॥ ५ ॥

निष्पङ्के पदपद्मसद्मनि सुधाऽत्यैलोक्यपद्माऽऽस्पदे,
प्रख्याते भुवनस्य मण्डनतया लावण्यलीलामधौ ।

यस्यामोदनिराजरं स्तुमगं मुञ्जन्ति विश्वाङ्गिनः,
पद्माऽङ्कं प्रणमामि पद्मरुचिरं पद्मप्रभं तं जिनम् ॥ ६ ॥

चञ्चत्पञ्चफणावली फणिपतेर्यस्योपरि भ्राजते,
भूयस्तद्गुणरत्नबन्धुरनिधे रक्षाकरीव प्रभुः ।
वल्गत्सन्द्रायुधकलिरत्नरुचिभिः शृङ्गारयन्ती दिशः,
स्वस्तस्वस्तिकलाञ्छनं नमत तं श्रीमत्सुपार्श्वं जिनम् ॥ ७ ॥

मन्दारद्रुममञ्जरीगुरुतरामुच्चिद्रतां बिभ्रती,
भृङ्गाणःमिव तद्यशः परिमलः प्रोल्लासमौभाग्यभृः ।
विश्वस्याऽपि शुभंयुजीवितमिवोपास्तिर्यदीया जिनो,
जीयाच्चन्द्रमरीचिवीचिरुचिरः चन्द्रप्रभः स प्रभुः ॥ ८ ॥

यत्पादाऽम्बुजभव्यभक्तिललितैः सद्यः प्रसादीकृता,
विन्दन् प्राप्यसमागमाः प्रतिभवं सर्वाः शुभाः सम्पदाः ।
नित्याऽऽनन्दमयीमिवाऽद्भुतदशां पुंसां दिशन्त्यो भृशं,
तं ध्यायामि समृद्धिधाम सुविधिं ध्येयं त्रिसन्ध्यं बुधैः ॥ ९ ॥

यः कन्दर्पसदर्पसर्पदलने प्रोद्दामसर्पाऽऽसनः,
कल्याणद्रुममञ्जरीजितनखश्रेणीमरीचिक्रमः ।
तं विश्वत्रयजन्तुगोचरकृपासान्द्रं जिनेन्द्रं मुदा,
वन्दे शीतलकान्तिशीतलगिरं श्रीशीतलस्वामिनम् ॥ १० ॥

देवानां बहुकोटिभिः परिगतं सेवोत्सवं कुर्वतां,
निस्सामान्यगुणाऽतिरेकसुभगं सर्वज्ञताऽलङ्कृतम् ।

सर्वाऽङ्गद्युतिचक्रवाललसितैर्नेत्राऽमृतश्राविभिः,
श्रीश्रेयांसजिनं चये श्रुतवतां श्रेयः श्रये विश्रुतम् ॥ ११ ॥

उद्यन्मोहमहामहीरुहलताभङ्गाय मत्तद्विपो,
मिथ्याज्ञानरजोऽवधूननविधौ धूतद्रुमुद्राऽनिलः ।
नित्यं यः स्तवनीयचारुचरितो वाचा च वाचस्पतेः,
पूज्यैः पूज्यपदाऽम्बुजः स जयति श्रीवासुपूज्यो जिनः ॥ १२ ॥
अक्षेमं क्षणते क्षणादपि दवज्वालावलीव द्रुमं,
पुष्पाणीव तनोति पुष्पसमयः कल्याणकीसम्पदम् ।
देवौघः प्रभु वः प्रभुशुभगते सिन्धुसुधाया इव,
तं वन्दे विमलं जिनेन्द्रममलं कैवल्यलक्ष्म्याः कुलम् ॥ १३ ॥

यस्य ध्यानवितानदीपकशिखामासाद्य मोहादयः,
सद्योऽपि प्रपतत्पतङ्गतुलया निर्नामनाशं ययुः ।
यो नम्राऽमरमौलिवन्द्यचरणः पुण्यप्रपादर्शनैः,
नानाकान्तगुणैश्च तं विनमताऽनन्तं जिनं सन्ततम् ॥ १४ ॥

रागद्वेषदुरन्तदीप्रदहनज्वालासु नव्याम्बुदं,
मर्त्याऽमर्त्यनिवर्तिताऽर्चिनिकरं कारुण्यपुण्याऽऽकरम् ।
आराध्योद्धुरधाम यस्य विदधे स्वं सिद्धिवध्वा धव,
धर्मं वो विदधातु बन्धुरधियां ध्येयः स धर्मो जिनः ॥ १५ ॥

यस्याऽऽस्याऽप्रतिमप्रकामविलसत्सौन्दर्यलक्ष्म्याऽऽश्रया,
स्वं रम्याऽङ्कमिषादुपायनतया कृत्वा मृगाऽङ्को मृगम् ।

लग्नानेकतनुः पद्मोः सितनखश्रेणिच्छलेना बभौ,
शान्तिं शान्तिजिनः सतां स तनुतां चक्रेश्वरः पञ्चमः ॥ १६ ॥

श्रीमत्तीर्थंकरत्वचक्रकमलाविस्फूर्जिताऽलङ्कृतं,
जन्मोच्चैः सुभगंभविष्णु जगतां वर्ण्यं यदीयं मुहुः ।
वन्देऽत्यर्थमनर्थदावदविधौ पाथोदपाथः पथं,
तं तथ्याऽऽवसथं शिवाध्वनि रथं श्रीकुन्थुनाथं जिनम् ॥ १७ ॥

राज्याऽऽडम्बरशक्रसोदरनमत्षट्खण्डभूमण्डली-
भूपालाऽऽवलिमौलिमणिभिश्चुम्बत्क्रमाऽम्भोरुहम् ।
राज्यं यः परिहाय चीर्णचरणस्त जग्मिवांसं शिवं,
वन्दे श्रीअरमस्ति दुर्गतिहरं श्रेयस्करं सत्वरम् ॥ १८ ॥

लीलाघातिकघातिकर्मचयतो यं ध्यानतः केवल-
ज्ञानश्रीः परिकर्मणो मणिमिव ज्योतिश्छटा शिश्रिये ।
देवेशं प्रणमामि तं स्वयशसा जिष्णुं लसन्मल्लिका-
माल्यं मल्लिजिनं जयध्वनिमुखैर्वन्द्यं सुरेन्द्रैरपि ॥ १९ ॥

मध्याह्नाऽम्बररत्नबिम्बकलितं व्योमेव वक्षस्थलं,
श्रीवत्साऽङ्कितमध्यभागसुभगं बभ्राज यस्य प्रभोः ।
येनाऽश्वप्रतिबोधतः स्वकरुणा-कीर्त्या मताऽलङ्कृता,
देवेशः स ददातु मे जिनपतिः श्रीसुव्रतः सुव्रतम् ॥ २० ॥

रेजे यस्य जगत्त्रयेऽपि विभुता श्वेताऽऽतपत्रत्रयीं,
शंसन्तीव सुधादृशां मणिभुवां सत्किङ्किणीनां क्वणैः ।

तं सन्मानवनाकिनायकजनैः ननम्यमानं नमिं,
नित्यं नौमि नमामि नम्रजनता–कल्पद्रुमं स्वामिनम् ॥ २१ ॥
अत्यन्ताऽद्भुतरूपसम्पदमयां संत्यज्य राजीमतीं,
स्फीतप्रीतिमदुग्रसेननृपतिं राज्यं च यः स्वप्रियाम् ।
यस्योच्चैर्व्रतभीयुषः कृतचमत्कारं चरित्रं चिरं,
तं सौभाग्यनिधिं नमामि मुदितः श्रीनेमिनाथं जिनम् ॥ २२ ॥
निःसीमाऽतिशयाऽवतंसितगुणप्रादुर्भविष्णुंस्तुतं,
साम्राज्यं त्रिजगत्सु यस्य यशसः स्वस्त्रैणगेयो विधिः ।
निर्विघ्नं घनसम्पदे प्रणयिनां जाग्रत्प्रभावं प्रभुं,
तं श्रीपार्श्वजिनं नमामि विनमद्देवेन्द्रवन्द्यक्रमम् ॥ २३ ॥
यत्पादाऽम्बुजपर्युपास्तिषु रतिस्फारैः फलन्तीं फलैः,
कामं कल्पतरोर्लतां विजयते स्वर्मोक्षलक्ष्मीकुलैः ।
तं सिद्धार्थनरेन्द्रवंशविलसल्लावण्यमुक्तामणिं,
वन्दे बन्धुरवर्द्धमानयशसं श्रीवर्द्धमानं जिनम् ॥ २४ ॥
चेक्राणान्परमोपकारनिकरं देवाधिदेवाश्च ते,
ख्यातिं जग्मुरशेषविश्ववलये ये केवलज्ञानिनः ।
भक्तिव्यक्तिकुतुहलाऽऽवलिमिलत्त्रैलोक्यलोकान्तिका–
स्ते जीयासुरजय्यमोहजयिनः सर्वे जिनेन्द्राश्चिरम् ॥ २५ ॥
यस्याऽत्यद्भुतचक्रवर्त्तिपदवीदेवेन्द्रराज्यादयो,
नित्याऽऽनन्ददशा मनोज्ञसुमनःश्रीताण्डवाऽऽडबरम् ।

---

१ प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिचतुर्विंशतिका भवति ।

भूयः पुण्यरसः समुन्नतमतिः श्रेयःफलाऽलङ्कृत-
श्चित्रं यः सुगतिक्रियस्तमसमं वन्दे जिनेन्द्राऽऽगमम् ॥ २६ ॥
भ्राजिष्णुः कविचक्रवल्लभपदा या पुण्डरीकश्रिया,
बिभ्राणा सुभगंभविष्णुभवनप्राधान्यमुद्यद्यशः ।
चित्रं जाड्यहरैरसैर्बहुविधैरानन्दनिःश्रोतसां,
देवी साऽस्तु सरस्वती भगवती नैर्मल्यमाल्याय मे ॥ २७ ॥

---

(४)

( मालिनीछन्दः )

जयपयडपयावं, मेहगंभीररावं,
भवजल(निधि)नावं, नायनीसेसभावं ।
हणिअकुसुमचावं, दोसकांतारदावं,
पढमजिण(म)पावं, वंदिमो छिन्नतावं ॥ १ ॥
सिवनिलयतिलकं, रागदोसेहि मुक्कं,
जणजणीअचमक्कं, भिन्नसंसारचक्कं ।
नमह नमिरसक्कं, मोहसेणाधसक्कं,
अजियमजीअवक्कं, नायतेलुक्कतक्कं ॥ २ ॥
पणयकयपसाया, कामदिन्नात्रसाया,
चलियभवविसाया, पत्तनिव्वाणसाया ।
सुरतरुमणिपाया, दिंतु नालीअछाया,
समसुहमणिदाया, संभवो सेयसाया ॥ ३ ॥

विलसिरगुणसत्थं, सव्वलोए पसत्थं,
पयडियपरमत्थं, सम्मनासे समत्थं ।
पसमियकुमयत्थं, नीयनिव्वाणसत्थं,
समरह समणत्थं, तित्थनाहं चउत्थं ॥ ४ ॥

सिरि सुमुइजिणेसं, रत्तिरत्तीदिणेसं,
गयसयलकिलेसं, मुक्कनीसेसलेसं ।
पणयपयसुरेसं, लद्धसिद्धीनिवसं,
फुरियनयविसेसं, वंदिमो सायकेसं ॥ ५ ॥

कमलविमलदेहं, नाणलच्छीइ गेहं,
जणियजणमणेहं, सीलसंपत्तिरेहं ।
सुकयवणसुमेहं, भत्तिसंभंतरेहं,
पउमप्पहमणेहं, तित्थनाहं, नमेहं ॥ ६ ॥

वरकणयसुवन्नो, लोअविछिन्नविन्नो,
परमपयपवन्नो, छिन्नसंसाररन्नो ।
असरिसगुणगन्नो, पुन्नकारुन्नपन्नो,
हवउ जसकिरन्नो, मे सुपासो पसन्नो ॥ ७ ॥

विसयविससमंतं, गित्तसुद्धं वयंतं,
चइअभवमणंतं, जोगऊ मुत्तिकंतं ।
अणुदिणमरिहंतं, लोयपूयं पसंतं,
परमगुणमहंतं, सेव चंदप्पहं तं ॥ ८ ॥

१. 'पयडि' इति पाठान्तरम् । रत्ति-रागः ।

जय पयडजसोहं, पत्ततिल्लुक्कसोहं,

भुवणविहियबोहं, दड्ढकम्मप्परोहं ।

कयकरणनिरीहं, भग्गकंदप्पजोहं,

सुविहियजिण नमो हं, वंदिमो निच्चसोहं ॥ ९ ॥

हयदुरिअविहारं, मुत्तिकंतोरहारं,

गयसयलवियारं, पावविज्जुप्पहारं ।

परममहिमभारं, पत्तसंसारपारं,

नमह महियमारं सीयलं सत्तसारं ॥ १० ॥

पयडियवरदिट्ठिं, धम्मनिम्मायपुट्ठिं,

निरुवमसुहमुट्ठिं, दिन्नतीलुक्कतुट्ठिं ।

मम विहयकुदिट्ठिं, पंकनिस्सारलट्ठिं,

कुसलय मम वुट्ठिं, देउ सेअंस ! दिट्ठिं ॥११॥

परिहरिय सुरज्जो, पत्तपुन्नपविज्जो,

अमरनियरपुज्जो, रोससेलेसवज्जो, ।

जणमणकयपुज्जो, कम्मनिग्घायसज्जो,

कुणउ मम णवज्जो, मंगलं वासुपुज्जो ॥१२॥

उवसमरसतित्तं, कित्तिमप्फुप्पवित्तं,

विमलममलचित्तं, केवलालोयवित्तं ।

कुमयलयलवित्तं, लोयबोहेगचित्तं,

तिहुयणजणमित्तं, फुल्लनालीअवित्तं ॥१३॥

जडिमतिमरहंसो, जो तिलोयावयंसो,
सिवरमणिरिरंसो, निम्मलो तुंगवंसो ।
अमरकयपसंसो, पत्तकम्मप्पभंसो,
कुणइ उ मम सिद्धं, सोणंततित्थेसहंसो ॥१४॥

पयडियवरधम्मं, खीणनीसेसकम्मं,
वियलियभवघम्मं, पत्तनिव्वाणसम्मं ।
अइसयसयरम्मं, नारयाणंदजम्मं,
पणमह सिरिधम्मं, भिन्नसंसारमम्मं ॥१५॥

कणयसरिसकंती, कंतसद्दंतपंती,
फुरियपरमसंती, नट्ठनीसेसभंती ।
भवतरुगुरुदंती, पत्तपावोपसंती,
भवणजणिअसंती, मंगलं देउ संती ॥१६॥

वरमुणिगणझेयं, देवगंधव्वगेयं,
जणियसयलजेयं, नायनीसेसमेयं ।
कयकलिमलछेयं निच्चमच्चेहमेयं,
भुवणजणियसेयं, कुंथुनाथं स्तुवे हं ॥१७॥

गरुअगुणगरिट्ठं, भग्गवग्गतरिट्ठं,
परमसिरिवरिट्ठं, नट्ठकम्मट्ठकट्ठ ।
तिजयसिरिनिविट्ठं, लोयनिग्घायरिट्ठं,
अरजिणतममिट्ठं वंदिमो सव्वजिट्ठं ॥१८॥

सुचरिअ जिअमल्ला, भग्गलोगंतसल्ली
करणमयणहल्ली, भिन्नसंसारपल्ली ।
नियडविअडवल्ली, च्छेयतिकूलासिवल्ली,
मर्म रिउजियभल्ली, भावमप्पेउ मल्ली ॥१९॥

सतणुजियतमालं, रागरोसंतकालं,
करणहरणजालं, भत्तदेविंदमालं ।
निरुवमगुणजालं, पाणिणं कप्पसालं,
नमह महविसालं, सुव्वयं सामसालं ॥२०॥

जणकुमयमयंकं, प्फुल्लनीलुप्पलंकं,
हरियसयलपंकं, मोहदिन्नाभिसंकं ।
सिवबहुअसहियंकं, सोसीयं नाणपंकं,
नमिजिणमकलंक, समरामो निसंकं ॥२१॥

भवदलजलवाहं, नट्ठकम्मट्ठबाहं,
जणकयसिवलाहं, केसवं दोलिबाहं ।
गुणजलहिमगाहं, दिन्नतिलुक्कच्छाहं,
सयलसिरिसणाहं, वंदिमो नेमिनाहं ॥२२॥

तिजयकयपयासो, लोयसंपूरिआसो,
सिवनयरिनिवासो, मोहदिन्नप्पवासो ।
गयविसयपवासो, सव्वदोसप्पणासो,
विउलियभवपासो, निव्वुइ देउ पासो ॥२३॥

कणयसमसरीरं, मोहमल्लेगवीरं,

दुरियरयसमीरं, पायदावग्गिनीरं ।

सुगहिअभवतीरं, लोयलंकारहीरं,

पणमह सिरिवीरं, मेरुसेलेसधीरं ॥२४॥

तमतिमिरदिणंदा, पुन्नपायारविंदा,

कुमयकमलचंदा, दड्ढसंसारकंदा ।

विसयविसनरिंदा, भत्तदेविंदविंदा,

परमसुहममंदा, दितु सव्वे जिणिंदा ॥२५॥

सयलगुणनिहाणं, मुक्खसम्मग्गजाणं,

विविहगुणपमाणं, दिन्नतिलुक्कताणं ।

महियकुमयमाणं, बारसंगप्पमाणं,

पणमह सुयनाणं, सव्वसिद्धीनिहाणं ॥२६॥

जिणपयपणअंगी, निम्मलासारसंगी,

वररमणकुरंगी, संघरक्खे विहंगी ।

ससहरसहसंगी, वंगसंगेरभंगी,

भवभयभयरंगी, दिउ सुक्खं सुयंगी ॥ २७ ॥

---

१. प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिचतुर्विंशतिका भवति ।

# अज्ञातकर्तृ-स्तुतिचतुर्विंशतिका

( आर्याछन्दः )

पढमो नरेसराणं, पढमो साहूण केवली पढमो ।
पढमो तित्थयराणं, रिसहजिणो कुणउ कल्लाणं ॥ १ ॥
कंचणगोरसरीरो, लंछणि वरकुंजरो गवलवण्णो ।
रिट्ठरयणं व रेहइ, जस्स जिणो सो जयउ अजिओ ॥२॥
अभवो संभवदेवो, पक्खालियसयलकम्ममललेवो ।
भवभीरुयभवियाणं, दुहभवसंभवभयं हरउ ॥ ३ ॥
जस्संगचंगिमाणं, तुलमाणं कंचणं पि अणवरयं ।
हवइ अणेगागारा, तं जिणमभिनंदणं वंदे ॥ ४ ॥
गब्भवसहिनिवसंतो, पयधारुज्जलफुरंतविन्नाणो ।
संजणिअजणणि सुमई, सुमई तित्थेसरो जयउ ॥ ५ ॥
सो जयउ पउमनाहो, वण्णमिसेणं पयासिओ जेण ।
मणनिच्छूढो राओ, जणलोयणपच्चयत्थं व ॥ ६ ॥
सिवपुरिविहियनिवासो, दुरियं अवहरउ जिणवर सुपासो ।
फणमणिसेणिमिसेणं, पईवपव्वं व पयडंतो ॥ ७ ॥
पूरियपुट्ठुलट्ठियकेवल-धवलीकयं व जस्संगं ।
सो चंदप्पहदेवो, नंदउ सुरविंदकयसेवो ॥ ८ ॥
पणमामि पुप्फदंतं, देवं पुरिसुत्तमं अकिण्हंपि ।
मयरद्धयं अकामं, संकरमीसाणमवि अभवं ॥ ९ ॥

संसारदुहदवानल--जालापरितावताविअं तत्तं ।
कारुण्णजलहि ! सामी--सीयल ! मह सीयलं कुणसु ॥१०॥

सेयंसो जंतूणं, खणंपि दिट्ठे वि जस्स मुहकमले ।
सेयं सो जं देई, पुईओ तं कहं भणिमो ॥ ११ ॥

सो जयउ वासुपुज्जो, जं सेवइ सेरहो लंछणत्थो ।
जमवाहणत्तिमेयं मा होउ पुण्णत्ति भण्णंति ॥ १२ ॥

जो विमलो देहेणं, विमलो नाणेण दंसणेणं च ।
विमलो चारित्तेणं, सो जयउ जिणेसरो विमलो ॥ १३ ॥

तं नमह जिणमणंतं, संपत्तविसालभवसमुद्दंतं ।
जस्स न लब्भइ अंतं, सुहदंसणनाणविरियाणं ॥१४॥

पणमह जिणवरधम्मं, धम्मियमणुया विसुद्धभावेणं ।
खविऊण जेण कम्मा, होइ अकम्मा सयाकालं ॥१५॥

संतो संतिजिणिंदो, संतिकरो संतदुरियसंताणो ।
संतिं करेउ संताव--नासणं संतिसंताणं ॥ १६ ॥

निरुवमसिद्धिसणाहो, सिवपुरिपुरलग्गमग्गसत्थाहो ।
मह होउ कुंथुनाहो, संपाडियदुविहसुहलाभो ॥१७॥

सिद्धिपुरंधीइ कए, मुक्का चउसट्ठिसहस्सरमणीओ ।
अरजिणवर ! तुह चरियं, अच्छरियं कस्स न जणेइ ? ॥१८॥

निम्महियमोहमल्लं, मल्लिं तित्थेसरं पणिवयामि ।
इत्थीण पहाणत्तं, निव्वडियं जस्स तित्थंमि ॥ १९ ॥

धरणिभरधरणखिन्नो, जस्स समीवंमि वीससइ कुंमो ।
लंछणछलेण देवं, तं **मुणिसुव्वयमहं** वंदे ॥२०॥
निच्चमखंडियचित्तं, पहुप्पयावं कलंकपरिमुक्कं ।
अरुणकरं निद्दोसं, अहिनवचंदं **नमिं** नमह ॥२१॥
रायमई रायमई, रायमई जेण तिण्णि परिचत्ता ।
घणवण्णो घणवण्णो, घणवण्णो सो जयउ **नेमी** ॥२२॥
पायडियसत्ततत्तो, धरणिंदसरीरफणकडप्पेणं ।
तुट्टभववासपासो, **पासो** मह मंगलं देउ ॥२३॥
जियमोहमहावीरो, चरमो तित्थंकरो **महावीरो** ।
असमसमो असमसमो, निरंतरं कुणउ कल्लाणं ॥२४॥
( उपजातिवृत्तम् )
[1]**जिणावली** दिव्वफुरंतनाणा, विभिन्नवण्णा उ तणुप्पमाणा ।
संपत्तसंसारसमुद्दपारा, सुहावहा होउ तिलोअसारा ॥२५॥
( मालिनीछन्दः )
सुनयजलगभीरो वायकल्लोलमालो,
पयडियवरसुत्तो चारुमुत्तीहि जुत्तो ।
विलसिरबहुसत्तो किं नु कुग्गाहचत्तो,
जिणवयणसमुद्दो देउ अम्हाण भद्दं ॥२६॥
( शार्दूलविक्रीडितवृत्तम् )
दिव्वालंकरणोरुतेअविरहीभूअंधयारागमा,
हुंकारुज्झुणिमुत्तिभीरविमुही भूअं न विद्देसणो ।

---

१ प्रान्तपद्यत्रयेण साकं भण्यते तदा स्तुतिचतुर्विंशतिका भवति

अच्चंतं जिणसासणंमि निरया सव्वण्णुसेवाकरा,
सव्वे हुंतु सुरासुरा भगवओ संघस्स खेमंकरा ॥२७॥

---

## ( २ )

### ( उपजातिवृत्तम् )

सीमंधराऽधीश ! महाविदेह–श्रोणीवतंस ! सुमहा ! विदेह ! ।
भवान् भवत्ताविष ! वै नतेऽय–श्रीदोऽस्तु मे रुग्विषवैनतेय ! ॥१॥

युगन्धर ! त्वं परमां प्रदेहि–काम्यां मम ब्रह्मरमां प्रदेहि ।
दुरन्तदुष्कर्मभवाऽऽधिकार–स्कराऽऽवली-भो विभवाऽधिकार ! ॥२॥

श्रीबाहुनेतस्तनुतां भवस्य, दुष्कर्मबन्धात्तनुतां भवस्य ।
भवान्नतस्यासुमतोऽसमान–गुणावले ! सत्सुमतोऽसमान ! ॥३॥

सुबाहुतीर्थेश ! नवाऽरिदाव–नीरर्द्धिवल्लीवनवारिदा ! ऽव ।
भवोदपाने पततो मम त्वं, नुदन्नतालीकृततो ममत्वम् ॥४॥

हे पोत ! संसारमहोदधाव–भितो हि ते सारमहो दधाव ।
देयाः शिवं वः ससुजात ! रूप–स्मरा!ऽङ्गकान्त्यस्तसुजातरूप! ॥५॥

दुःखं जिनेशा !ऽपनयस्व कान्त–घुसत्कृतोद्यद्विनय ! स्वकान्त ! ।
स्वयंप्रभ ! त्वं विनमज्जनानां, कृतक्षमाजीवनमज्जनानाम् ॥६॥

नमोऽस्तु ते श्रीऋषभाननाऽऽय–प्रदाय शश्वद् वृषभाऽऽननाय ।
सुरासुरैन्द्रैर्महिताय कामं, विनिघ्नते विश्वहिताय कामम् ॥७॥

---

१ जायमान. स्वर्गः यस्मात् । २ वृक्षाऽऽवली । ३ °ता–लक्ष्मीः।

अनन्तवीर्यो वरराजितोय–वर्पं घनः संवरराजितो यः ।
तनोतु [1]संसृत्युदयाऽऽसमुद्रः, श्रेयो जिनो वः स दयासमुद्रः ॥८॥
सूरप्रभाधीश्वर ! मा मुदाऽऽरा–न्ततं ददच्छैवरमामुदाराम् ।
रक्षाऽक्षयज्ञान! तमोहरा!ऽऽगः, सारङ्गसिंहो गतमोह!ऽऽरागः ॥९॥
विशाल ! तायिन् ! सनय!स्वराऽम–भेदिन् ! प्रबोधं जनयस्व [2]रैम ! ।
स्थैर्याऽस्तभूभृद्वरमेरुजन्तु–हितस्तमोजां हर मे रुजं तु ॥ १० ॥
आज्ञां वरां मूर्ध्नि वहेम धाम–नीराग ! यत्ते नवहेमधामन् ।
मानद्विपे वज्रधरा!ऽज्ञजाऽरे–नोऽव श्रिताच्चित्तधरां गजारे! ॥११॥
भव्याऽस्तलोभाशममानमार !, चन्द्रानना!ऽर्हन्तममानमार ! ।
श्रये जिनाधीश ! सुधामनोज्ञ–वाचं भवन्तं वसुधामनोज्ञ ! ॥१२॥
दूरीचरीकर्ति नमःसमूहं, यद्वाक्चयो वर्यतमः समूहः ।
श्रीवज्रबाहोः कमलाऽऽशयस्य, तस्य क्रमौ नौम्यमलाऽऽशयस्य।१३।
भुजङ्गभर्तः ! भवतोयदस्य, भिद्युग्रवायो ! भवतोऽयदस्य ।
वचश्चयः श्रीजिनराज ! पाता–न्मां दुर्गतेर्नम्रनरा!ऽज!पातात् ॥१४॥
व्रतं दधौ यः [3]शुभरं विहास्सदर्चितो भोगभरं विहाय ।
तमीश्वरं तीर्थकरं नु वाम–पञ्चेषुपङ्कोष्णकरं नुवामः ॥१५॥
नमन्नराऽमर्त्यसभाजनाय, माध्यस्थ्यसच्चन्द्रसभाजनाय ।
नेमिप्रभाधीश्वर ! तेऽस्तु तारं, नमो बुधैर्धर्मरते! स्तुताऽरम् ॥१६॥
श्रीवीरसेनं जितमोहसेनं, मुक्तं सदा मानतमोहसेन ।
स्तुवन्नरः स्याद्दमदं तु दन्त–पंक्त्या सुखी पुष्पमदं तुदन्तम् ।१७।

---

१. संसारक्षे पंकानां द्दर्पदः । २. प्रधान ! । ३. शुभदाम् ।

मम प्रदेया वृजिनाऽऽधिराज–रवे ! महाभद्र ! जिनाऽधिराज ! ।
भवभ्रमोत्थश्रमहाम–हीन–कीर्ते ! मतिं नम्रमहामहीन ! ॥ १८ ॥

दद्यान्मुदं देवयशा हिमानी–हंसाऽऽवलिश्वेतयशा हि मानी ।
कैवल्यलक्ष्मीसदनं तरङ्ग–रङ्गद्गुणाऽऽलीसद–नन्तरङ्गः ॥ १९ ॥

यं पाददीप्त्या सुरराज राजी–वाऽऽस्यं नमन्ती सुरराजराजी ।
तन्यान्मतं मेऽजितवीर्यपार–गतः स दक्षाऽगतवीर्यवारः ॥२०॥

श्रेयस्करः श्रीऋषभः सदा नः, सोऽस्तु क्षमाधूर्वृषभः सदानः ।
जवेन कर्ता नमदङ्गिराय–च्छिनत्ति पीयूषमदं गिरा यः ॥ २१ ॥

गङ्गेव तापं जनतासु गौराऽऽ–च्छिनत्ति यस्याऽवनतासु गौरा । -
चन्द्राननोऽसौ धृतिलो ममाऽल–मस्तु श्रियेऽस्तप्रतिलोममालः ।२२।

श्रीवारिषेणं तरसा पराऽगं, भव्यव्रजत्राणरसाऽपरागम् ।
नमामि कीर्त्यस्तहरं नदीनं, गाम्भीर्यतो मोहहरं नदीनम् ॥२३॥

श्रीवर्धमाने–शमलोभवन्तं, यः स्तौति भक्त्या विमलो भवन्तम् ।
सङ्गं शिवश्रीस्तरसा न तस्य, चिकीर्षते सा न रसानतस्य ॥२४॥

रतिं जिना मे सकलाः क्रियासु, शस्यासु शश्वत्सकलाः क्रियासुः ।
दिवाकराऽमानतनुप्रभा वाः–पवित्रवाक्या अतनुप्रभावाः ॥ २५ ॥

कृतं यतीनां गुरुणा कृतान्तं, भवस्य नो नौम्युरुणा कृताऽन्तम् ।
कुवादिवीथीविपदाऽऽधिरो–हं, प्रजाभवत्सिद्धिपदाऽधिरोहम् ॥२६॥

---

१. प्रान्तपद्यत्रयेण साकं भण्यते तदा श्रीसीमन्धरादि जिनस्तुतयो भवन्ति। २. तीर्थङ्कृता । ३. सिद्धान्तम् ।

प्रह्लांशयां शासनभासतायाऽ–र्हतां यशःपूर्णनभाः सनाथा ।
गीर्देवताऽऽढ्या प्रवरक्षणेन, [1]धिनोतु वः शात्रवरक्षणेन ॥२७॥

---

( ३ )

महंति जे भावजुआ तिसंझं, जिणिंदरायं गयरायदोषं ।
लीलाइ ते मुत्तिसिरीविवाहं, करंति भावारिनिवारणेण ॥ १ ॥
जइ अत्थि सिद्धित्थिसुहे मणो ता, उसहाइ वीरंतजिणे थुणेह ।
हेमिंदुनीलंजणरत्तवण्णे, नित्थिण्णवित्थिण्णभवण्णवे अ ॥ २ ॥
सट्ठिअ लक्खा गुणनऊ अ कोडी, भवणेसु कोडीण सवाइ तेर ।
असंखया जोइवणेसु बिंबे, नमेह भत्तिब्भरनिब्भरंगा ॥ ३ ॥
नइ–वास–वेअड्ढ–वक्खार–कुण्ड–गयदंत–मेरु–द्दहमाइठाणे ।
बिंबाइ वंदे तिरिअं तिलक्खा, सहसेगनउआ सयतिण्णि वीसं ॥ ४ ॥
पडिमाण कोडीण सयं च एगं, बावन्नकोडी चउनउअ लक्खा ।
चउचत्त सहसाइं सयाइ सत्ता, सड्ढा विमाणेसु नमामि उड्ढं ॥ ५ ॥
सव्वग्गकोडी पनरस्सयाइं, दुचत्त कोडी अडवण्ण लक्खा ।
छत्तीस सहस्सा असीआइ निच्चं, बिंबाइ वंदे भुवणत्तयंमि ॥ ६ ॥
नंदीसरे अट्ठमए सुदीवे, निच्चेसु बावन्नजिणालएसु ।
सिरिवद्धमाणोसहवारिसेण–चंदाणणक्खे पणमामि नाहे ॥ ७ ॥
निम्मावियम्मी भरहेण रण्णा, भत्तीइ अट्ठावयनामतित्थे ।
वण्णप्पमाणंकमणुन्न बिंबे, रिसहाइ चउवीसजिणे थुणामि ॥ ८ ॥

---

१. प्रीणातु ।

अजिआइवीसं जिणचन्दनाहा, सिवं गया जत्थ निसिद्धभत्ता ।
सुपव्वकयथूभगणाभिनंदो, नंदउ स सम्मेअगिरी सयावि ॥ ९ ॥
जयउ चिरं तं भुवणंमि तित्थं, सित्तुजयं सव्वभिहापहाणं ।
जहि संथुओ आइजिणो जणाणं, दुहा महाणंदसिरिं करेइ ॥१०॥
वयनाणसिद्धिप्पमुहेहिसवेहिं, जं पाविअं नेमिजिणेसरस्स ।
तं भव्वजीवा सिवसुक्खहेउं, झाएह उज्जिंतगिरिं सुतित्थं ॥११॥
जंबूविदेहम्मि नमामि सीमं–धरं च जुगमिंधरनामधेयं ।
बाहुं सुबाहुं च चउप्पयारं, पयासयंतं भवियाण धम्मं ॥१२॥
चंदाणणं सूरपहं सुजायं, वसहाणणं वज्जहरं विसालं ।
अणंतविरिअं च सयप्पहं च, वदे जिणे धाइअखंडि अट्ठ ॥१३॥
नेमिप्पहं ईसरचंदबाहुं, महभद्ददेवासणदेवकित्ति ।
अजेअविरिअं च भुअंगनाहं, थुणे जिणे अट्ठवि पुक्खरद्धे ॥१४॥
वदे सयं सत्तरिसंजुअं च, उक्किट्ठकाले जिणनायगाणं ।
विदेहभरहेरवयाभिहाण, दसपंचकम्मावणिमंडणाणं ॥१५॥
गयसंपयाणा–गयलोगनाह, जिणाण चउवीसितिगं सरण्णं ।
चारित्तसद्दंसणनाणरुव-रयणाण हेउं हिअए धरेमि ॥१६॥
चउगईदुक्खनिवाररूवं, धम्मं दिसंतं चउरूवएणं ।
जिणं जियाणं वरपाडिहेरं, सुरेहि रइओसरणम्मि सेवे ॥१७॥
तित्थाइभएण परंपराए, सिद्धा य जे कम्मखएणणंता ।
सिरिपुंडरीअप्पमुहा मुणी ते, अणोवमं सिद्धिसुहं दिसंतु ॥१८॥
दिणमासनक्खत्तगहाइएहिं, जं तुल्लयं सव्वजिणाण निच्चं ।
जं नारयाणंपि सुहप्पयंतं, जिणिंदकल्लाणगपंचगं थुणे ॥१९॥

सिरिआइनाहं मणलोअणाण-माणंदयारिं भुवत्तयस्स ।
सोहग्गसारं सिरिनेमीनाहं, नमामि तित्थेसरि अव्वुअम्मि ॥२०॥
उत्तुंगपासायवडिसरूवं, कुमाररण्णो किर मुत्तपुण्णं ।
सिरिअजिअसामी पयसुप्पवित्तं, तित्थं जयउ तारणदुग्गयंमि ॥२१॥
नाभेयदेवं सिरिसंतिनाहं, नेमिं जिणं पासजिणं च वीरं ।
अणंतनाणाइगुणाण ठाणं, सरेमि आरासणनयरतित्थे ॥२२॥
निच्चोअएणं उइआणि निच्चा-निच्चाणि तित्थेसु जयम्मि जाइं ।
जिणिंदबिंबाणि नयाणि ताणि, हरंतु मे मोहमदंभयारं ॥२३॥
नमंसई जो जिणबिंदमेवं, लद्धूण सो बोहिसुजाणवत्तं ।
भवं भवं भूरिकिलेसजालं, तरिउं सुहेणं सिवदीवमेइ ॥ २४ ॥
दुवीसबत्तीसदसिदिएहिं, मेरुम्मि जम्मस्स कओभिसेओ ।
नेमिस्स जीए सुअपंचमीए, तवेण तं नाणकए निसेवे ॥२५॥
भेत्तीइनामागिइदव्वभाव-जिणा थुआणंतगुणाभिरामा ।
नराण तारंतु भवोअहीओ, बोहिप्पयाणा जगबंधवा य ॥२६॥
नो अत्थओ वीरजिणेण वुत्तो, अणुग्गहत्थं गणहारिबद्धो ।
जो आगमो तत्तपयत्थदंसी, हवउ जियाणं जयदीवउ व्व ॥२७॥
विग्घोवसंतिं च समाहिदाणं, कुणंतु देवा जिणपायभत्ता ।
सम्मत्तचित्ता जिणचंदआणा-रयाण धम्मावसम्मि सम्मं ॥ २८ ॥

१. प्रान्तपद्यत्रयेण साकं भण्यते तदा विविधतीर्थादि स्तुतयो भवन्ति ।

# द्वितीयस्तरङ्गः

## श्रीशत्रुञ्जयमण्डन–आदिजिनस्तुतिः ।

( स्रग्धराछन्दः )

शैले शत्रुञ्जयाऽऽख्ये भवजलधिपतज्जन्तुपोतायमाने,
चैत्ये चञ्चत्पताकाप्रकटसितपटे कूपकाऽऽभे गुणाऽऽढ्ये ।
नेतुं पारे परस्मिन् शिवनगरमहाराज्यलाभाय लोकं,
कुर्वन्निर्यामकत्वं जयति जिनपतिर्नाभिभूपालसूनुः ॥ १ ॥

यत्पादाऽम्भोजरेणुस्तबकतिलकिता भाविनो भावनम्रा,
भुक्तेर्मुक्तेश्च लक्ष्म्याः स्फुटमिह सुभगं भावुकत्वं भजन्ति ।
ते सन्तो भाव्यतीता विमलगिरिमहाशृङ्गशृङ्गारकाः(ये),
पायासुर्लोकसारा जिनवरवृषभाः क्लृप्तविश्वोपकाराः ॥ २ ॥

शैले श्रीपुण्डरीके समवसृतिमुखान् उन्नतैर्यद् घनाभै–
र्भव्यानानन्दयद्भिः शिखिन इव लसद्देशनागर्जितेन ।
उद्गीर्णं तीर्थराजैः श्रुतममृतमिद बोधिबीजानुरूपं,
श्रेयःसम्पत्फलाद्यं प्रथयतु सुकृताङ्कुरपूरं जगत्याम् ॥ ३ ॥

पुण्यात्पुण्यानुबन्धान्नियमलवभवात् पूर्वजन्मानुचीर्णात्,
देवत्वं प्राप यः श्रीविमलगिरिमहातीर्थसेवापवित्रम् ।
कल्याणीभक्तिरुच्चै प्रथमजिनपतेः पादपद्मार्चनेऽसौ,
श्रीयक्षेशः कपर्दी भवतु भवभृतां भूतये शान्तये नः ॥४॥

( स्रग्धराछन्दः )

आनन्दा नम्रकम्रत्रिदशपतिशिरःस्फारकोटीरकोटी-
प्रेङ्खन् माणिक्यमालाशुचिरुचिलहरीधौतपादारविन्दम् ।
आद्यं तीर्थाधिराजं भुवनभवभृतां कर्ममर्मापहारं,
वन्दे शत्रुञ्जयाख्यं क्षितिधरकमलाकण्ठशृङ्गारहारम् ॥ १ ॥
माद्यन्मोहद्विपेन्द्रस्फुटकरटितटीपाटने पाटवं ये,
बिभ्राणा शौर्यसारारुचिरतररुचां भूषणं योचितानाम् ।
सद्वृत्तानां शुचीनां प्रकटनपटवो मौक्तिकानां फलानाम्,
तेऽमी कण्ठीरवाभा जगति जिनवरा विश्ववन्द्या जयन्ति ॥२॥
सद्बोधावन्ध्यबीजं सुगतिपथरथः श्रीसमाकृष्टिविद्या,
रागद्वेषाहिमन्त्रः स्मरदवदवथुः प्रावृषेण्याम्बुवाहः ।
जीयाज्जैनागमोऽयं निबिडतमतमस्तोमतिग्मांशुबिम्बं,
द्वीपः संसारसिन्धौ त्रिभुवनभवने ज्ञेयवस्तुप्रदीपः ॥ ३ ॥
यः पूर्वं तन्तुवायः कृतसुकृतलवैर्दुष्कृतैः पूरितोऽपि,
प्रत्याख्यानप्रभावादमरमृगदृशामातीथेयं प्रपेदे ।
सेवाहेवाकशाली प्रथमजिनपदाम्भोजयोस्तीर्थरक्षा-
दक्षः श्रीयक्षराजः स भवतु भविनां विघ्नमर्दी कपर्दिः ॥४॥

(१) आदिजिनस्तुतयः ।

( उपजातिवृत्तम् )

भावोनयानेगनरिंदविंदं, सव्विदसंपुज्जपयारविंदं ।
वन्दे जसो निज्जियचारुचंदं, कल्लाणकंदं पढमं जिणिंदं ॥१॥

---

१. पू. श्रीगुणविजयगणिना कृता ।

चित्तेगहारं रिउदप्पदारं, दुक्खग्गिवारं समसुक्खकारं ।
तित्थेसरा दिंतु सया निवारं, अपारसंसारसमुद्दपारं ॥ २ ॥
अन्नाणसत्तुक्खलणे सुवप्पं, सन्नायसंहीलियकोहदप्पं ।
संसेमि सिद्धंतमहो अणप्पं, निव्वाणमग्गे वरजाणकप्पं ॥ ३ ॥
हंसाधिरूढा वरदानभन्ना, नाएसरी नाणगुणोववण्णा ।
निच्चंपि अम्हे हवउ प्पसन्ना, कुंदिंदुगोक्खीरतुसारवन्ना ॥ ४ ॥

(२)

(वसन्ततिलकावृत्तम)

भक्तामरप्रणतमौलिमणिप्रभाणा–
मुद्दीपकं जिनपदाम्बुजयामलं ते ।
स्तोष्ये मुदाऽहमनिशं किल मारुदेव !,
दुष्टाष्टकर्मरिपुमण्डलभित्सुधीर ! ॥ १ ॥
श्रीमज्जिनेश्वरकलापमहं स्तुवेऽ–
मुद्योतकं दलितपापतमो वितानम् ।
भव्याम्बुजातदिननाथनिभं स्तवीमि,
भक्त्या नमस्कृतममर्त्यनराधिराजैः ॥ २ ॥
वर्यां जिनक्षितिपतेस्त्रिपदीमवाप्य,
गच्छेश्वरैः प्रकटिता किल वाग्मुदा या ।
सम्यक् प्रणम्य जिनपादयुगं युगादा–
वेवं शुभार्थनिकरै र्भुवि साऽस्तु लक्ष्म्यै ॥ ३ ॥

१ सज्ञुत्ति ।

यक्षेश्वरस्तव जिनेश्वर ! गौमुखाह्वः,
सेवां व्यधत्त कुशलक्षितिभृत्पयोदः ।
त्वत्पादपङ्कजमधुव्रततां दधानो,
वालम्बनं भवजले पततां जनानाम् ॥ ४ ॥

( ३ )

( वसन्ततिलकावृत्तम् )

गीर्वाणमौलिकमणिरत्नशिखाकलाप-
चञ्चन्मरीचिनिचयाऽर्चितपादपीठम् ।
चामीकरद्युतिसमप्रभविश्वनाथं,
प्रातः प्रणौमि परमेश्वरनाभिपुत्रम् ॥ १ ॥

क्षीरोदवारिपरिपूर्णमहासुगन्ध-
मत्तभ्रभङ्ग्रमरगुञ्जरवाऽभिरामैः ।
ये स्नापिताः सुरगिरौ मणिरत्नकुम्भैः,
शर्कैर्जिनाः प्रवितरन्तु हितानि नस्ते ॥ २ ॥

स्याद्वादभीमनखचक्रविराजितांऽह्रिः,
सत्साधुकारिमुखपञ्जरमध्यवासी ।
गर्जन् कुवादिकलिकुञ्जरदर्प्पभेदी,
जैनाऽऽगमो जयतु केसरिवत्प्रभाते ॥ ३ ॥

दर्पोद्धतद्विरदपृष्ठमधिष्ठितो यः
स्फारस्फुरत् रुचिररत्नकिरीटकोटिः ।
नानामणिप्रकररञ्जितपादपीठः,
प्रातस्तनोतु मम शर्म कपर्दियक्षः ॥ ४ ॥

(४)

(अनुष्टुभ्)

युगादिपुरुषेन्द्राय, युगादिस्थितिहेतवे ।
युगादिशुद्धधर्माय, युगादिमुनये नमः ॥ १ ॥
ऋषभाद्यावर्द्धमानान्ता, जिनेन्द्रा दश पञ्च च ।
त्रिकवर्गसमायुक्ता दिशन्तु परमां गतिम् ॥ २ ॥
जयति जिनोक्तो धर्मः, षड्जीवनिकायवत्सलो नित्यम् ।
चूडामणिरिव लोके, विभाति यः सर्वधर्माणाम् ॥ ३ ॥
सा नो भवतु सुप्रीता, निर्द्धूतकनकप्रभा ।
मृगेन्द्रवाहना नित्यं, कूष्माण्डी कमलेक्षणा ॥ ४ ॥

(५)

(कामक्रीडावृत्तम्)

उद्यत्सारं शोभागारं पुण्याधारं श्रीसारं,
श्रेयस्कारं नित्योदारं कान्ताकारं निर्मारम् ।
पेक्षावन्तं वन्देऽहं तं प्रोद्यद्दन्तं श्रीमन्तं,
रम्भागेयो मोहाजेयो बुद्ध्याध्येयो नाभेयः ॥ १ ॥
सेव्यं व्यक्ते नित्यासक्ते श्रद्धायुक्ते सद्भक्तैः,
ज्योतिस्तारं चर्चाचारं सद्योदारं दातारम् ।
सार्वव्रातं व्यस्तासातं बुद्ध्याध्यातं विख्यातं,
विद्यावृन्दं वन्देऽमन्दं सम्पत्कन्दं सानन्दम् ॥ २ ॥

---

१. सद्यादारम् ।

स्तोष्येऽहं संतापध्वंसं स्फुर्जच्छंसं सिद्धं तं,
नित्याह्लादं शान्तोन्मादं सद्विद्यादं सद्वादम् ।
श्रीसिद्धान्तं स्पष्टीमन्तं कामं कान्तं कामान्तं,
भव्यैर्ध्येयं जालामेयं ज्ञानादेयं मोहेयम् ॥ ३ ॥

चक्रेश्वर्या चञ्चच्चर्या रोचिर्वर्या सत्कार्या,
जैनाद्दिष्टा नष्टारिष्टा सर्वोत्कृष्टा स्वज्येष्ठा ।
शोभासारा सालङ्कारा रम्याहारा गीस्तारा,
सङ्घस्फारा-जेयादारा द्प्यत्तारा भूत्यै स्तात् ॥ ४ ॥

( ६ )

[ तोटकवृत्तम् ]

वरमुत्तियहारसुतारगणं, परचित्तकलत्त सपत्तधणं ।
पयपंकज छप्पय देवगणं, श्रीअव्वुय वंदुं आदिजिणं ॥ १ ॥

तियलोय नमंसियपायजुआ, घणमोहमहीरुहमुत्तिगया ।
परिपालिअ निच्चल जीवदया, मम हुंतु जिणागम सुक्खसया ॥२॥

पणयंगि महातम रोरहरं, कल्लाणपयोरुहवुड्ढिकरं ।
सुहमग्गकुमग्गपयासकरं, पणमामि जिणागममन्हिकरं ॥ ३ ॥

सिरिइंदसमुज्जलगायलया, सुहउज्झाण विणग्गिय एगलया ।
असुरिंदसुरेंदसुरप्पयया, मम वाणि सुहाणि कुणेसु स्या ॥४॥

---

१. सच्छंशम् । २. शान्तोन्मादम । ३. दृष्टिमन्तम् । ४. जाल-मेहेयम् । ५. ह्यादेयम् ।

( ७ )

जिनशासनभासनभासुरभानु समान ! ॥ १ ॥

सुरसुन्दरसेवित ! वृषभ ! जिनौघप्रधान ! ॥ २ ॥

परमागमसम्मतनयधनरत्ननिधान ! ॥ ३ ॥

श्रेयःश्रियमर्पय कमलविजयप्रियदान ! ॥ ४ ॥

( ८ )

[ अत्युक्ताजातौ स्त्रीछन्दः ]

नौम्यादीशं कर्मोन्मुक्तम् ॥ १ ॥

सर्वज्ञा वो मुक्ति रान्तु ॥ २ ॥

जैनं सूक्तं तक्ष्यात् कर्म ॥ ३ ॥

गोवक्त्रो वः श्रीभ्यो भूयात् ॥ ४ ॥

## पिशाचभाषाबद्ध—श्रीसुपार्श्वजिनस्तुतिः ।

[ उपजातिवृत्तम् ]

मनोभवाहंकइसकराहं, सिआ कयंदंति करोरुबाहं ।
दुहे सुधारानिअरेसणाहं, नुवे सुपासं नरनाहनाहं ॥ १ ॥

संखप्पवालकणयंजणकंदिकंदं, सिदंसुदिधीदिगणुज्जलदंदपंदिं ।
देवाकदादिसयबिंदजुदं पसंदं, सेवे जिणोहमुदिदं सुददं भदंदं ॥२॥

---

१. पू. आ. श्रीविजयसेनसूरीश्वरजी शिष्यकमलविजयेन कृता ।
२. वसन्ततिलकावृत्तम् ।

नाणाबाले विशतपतवले सादुआवालसाले,
धम्माधाले सुनयगमधले चालुचूलाविशाले ।
आच्छोदाले सवणसुहकले साहुकंढोलुहाले,
गाहागाहे जयइ सुसमए मुक्खमग्गेगदाले ॥ ३ ॥

सेव्वालंकालसाला भविअदुहहला संखदच्चोवयाला,
सालंकालाविकालाकमलमितुकलाकंतमातंकदाला ।
अत्थाचालाविहालासहिमथुलसलाता लताला सुताला,
खातोतंतासुतंतादतनुततमति शांतशांतासुलीणं ॥ ४ ॥

## श्रीवासुपूज्यजिनस्तुतिः ।

[ मालिनीछन्दः ]

*विमलगुणअगारं, वासुपूज्यसफारं,
निहतविषविकारं, प्राप्तकैवल्यसारम् ।
वचनरसउदारं, मुक्तितत्त्वे विचारं,
वीर विघननिवारं, स्तौमि चण्डीकुमारम् ॥ १ ॥

## श्रीशान्तिजिनस्तुतयः ।

( १ )

( मालिनीछन्दः )

सकलकुशलवल्ली पुष्करावर्त्तमेघो,
मदनसदृशरूपः पूर्णराकेन्दुवक्त्रः ।

---

१. मन्दाक्रान्तावृत्तम् । २. स्रग्धराछन्दः । * इयं स्तुतिः चतुर्शः उच्यते ।

प्रथयतु मृगलक्ष्मा शान्तिनाथो जनानां,
प्रसृतभुवनकीर्त्तिः कामितं कम्रकान्तिः ॥ १ ॥

जिनपतिसमुदायो दायकोऽभीप्सितानां,
दुरिततिमिरभानुः कल्पवृक्षोपमानः ।
रचयतु शिवशान्ति प्रातिहार्यश्रियं यो,

विकटविषमभूमीजातदर्त्ति बिभर्त्ति ॥ २ ॥
प्रथयतु भविकानां ज्ञानसम्पत्समूहं,
समय इह जगत्यामाप्तवक्त्रप्रसूतः ।
भवजलनिधिपोतः सर्वसम्पत्तिहेतुः,
प्रथितघनघटायां सर्पकान्तप्रकारः ॥ ३ ॥

जयविजयमनीषामन्दिरं ब्रह्मशान्तिः,
सुरगिरिसमधीरः पूजितो न्यक्षयक्षैः ।
हरतु सकलविघ्नं यो जने चिन्त्यमानः,
स भवतु सततं वः श्रेयसे शान्तिनाथः ॥ ४ ॥

( २ )

( हरिणीछन्दः )

स जयति सतामीशः शान्तिर्यदङ्कनतामरः,
प्रकटमुकुटोट्टंकी रत्नाङ्कुरप्रकरोरुवत् ।
ध्वजपृषदनुच्छायः शङ्के यदास्य लघुकृतः,
तरुणकिरणोपेतः कोपान् मृगाङ्कगणोऽरुणः ॥ १ ॥

शिवपथकथां तथ्यातीर्थाधिपाः प्रथयन्तु नः,
पृथुलदवथुं द्राक् कुर्वन्तु श्लथां च भवव्यथाम् ।
मणिघृणिमिषाद्येषामाङ्घ्रः पतन्ति पदो-
रदो विमलमनसां चेतांसि श्रीजिनाः प्रजयन्तु ते ॥ २ ॥

जिनपतिमतक्षोणिगाथ प्रकाशयनाथता,
मयि मयि शुचिः स्वर्गोपाङ्गी सुवर्णमणीनिधिः ।
विदितचरितोऽस्तोके श्लोकः सदर्थकदर्थितः,
प्रतिभटगतः स्तुत्यस्तुत्यानुशासनदर्शनः ॥ ३ ॥

गरुडसुकृतित्राणो दृतोर्ध्वदशात्वयारुणा,
तरदृशादृष्टः कालः प्रकम्पदरातुरः पद ।
बलगता शक्तो युक्तं सदण्ड-धरोधुना,
विनवितमिमधन्यमन्यं जनसुखीनं कुरु ॥ ४ ॥

( ३ )

( मालिनीवृत्तम् )

सुकृतकमलनीरं, कर्म्मगोसारसीरं,
मृगरुचिरशरीरं, लब्धसंसारतीरम् ।
मदनदहनवीरं, विश्वकोटीरहीरं,
श्रयति गिरिपधीरं, शान्तिदेवं गभीरम् ॥ १ ॥

जलधिमधुरनादा; निरसदा निर्विषादाः,
परमपदरमादा-स्त्यक्तसर्वप्रमादाः ।

दलितपरविवादा, भुक्तदत्तप्रसादा,
मदकजशशिपादाः, पान्तु जैनेन्द्रपादाः ॥ २ ॥

दुरिततिमिरसूरं, दुर्म्मतास्कन्दशूरं,
कुहठफणिमयूरं, स्वादुजिद् हारहूरम् ।
अशिवगमनतूरं, तत्त्वभाजामदूरं,
शृणुत वचनपूरं, चार्हतां कर्णपूरम् ॥ ३ ॥

जिनपनुवनसारा, नश्चमत्कारकाराः,
श्रुतमितसुरवाराः, कर्मपाथोधितारा ।
शुभतरुजलधाराः, सारसादृश्यधारा,
ददतु सपरिवारा, मङ्गलं स्रूपकाराः ॥ ४ ॥

( ४ )

( अत्युक्ताजातौ स्त्रीछन्दः )

दद्यादर्हन् शान्तिः शान्तिम् ॥ १ ॥
सार्वस्तोमं स्तौम्यस्ताघम् ॥ २ ॥
सिद्धान्तः स्साज्जैनो मुक्त्यै ॥ ३ ॥
निर्वाणी वो विघ्नं हन्यात् ॥ ४ ॥

## कुन्थुजिनस्तुतिः ।

( तोटकछन्द )

वशी कुन्थुवती तिलकौ जगति, महिमा महती नत इन्द्रतती ।
प्रथितागमं ज्ञानगुणा विमला, शुभवीरमता गान्धर्वबला ॥१॥

## अरजिनस्तुतिः ।

( द्रुतविलम्बितवृत्तम् )

अरविभुरविभूतलद्योतकं, सुमनसा मनसार्चितपङ्कजम् ।
जिनगिरा न गिरा परतारिणी, प्रणत यक्षपति वीर धारिणी ॥१॥

## अथ श्रीनमिजिनस्तुति ।

( १ )

( द्रुतविलम्बितवृत्तम् )

नमिजिनाय नमः परमात्मने, भवतु योगवशीकृतयोगिने ।
कुशलशालिवनस्तनयित्नवे, भुवनभावनभासनभानवे ॥ १ ॥

अमलकेवललोचनलोकनाऽ—गलदमङ्गुलमङ्गलमञ्जुलाः ।
अवृजिना वृजिनाऽपहृति जिना, ददतु वो महता-महताशयाः ॥२॥

प्रवचनामृतपानमनन्तरं, कुरुत भूपरमाः परमार्हताः ।
भवति वो यत एव सुनिर्वृत्तिं, विधिवताऽऽधिवतापि यदादृतम् ॥३॥

भगवती भवतु श्रुतदेवता, शिवशताय हिताय कृतादरा ।
विजयसेनगुरुक्रमसेविनां, सुमनसा मनसामभिनन्दना ॥ ४ ॥

( २ )

( द्रुतविलम्बितवृत्तम् )

※ विजयते विजयाङ्गजतीर्थकृत्, परिकरोपरमः परमागमः ।
सुरवरः स्पृहणीयगुणोच्चयो, विजयसेनगुरोः कमलोदयः ॥१॥

---

१. पू. मुनिराजश्रीकमलविजयेन १६९७ लीपीकृतम् ।
* इयं स्तुतिः चतुर्थः उच्यते ।

## श्रीनेमिजिनस्तुतयः ।

( १ )

( द्रुतविलम्बितवृत्तम् )

कमलवल्लपनं तव राजते, जिनपते ! भुवनेश ! शिवात्मज ! ।
मुकुरवद् विमलं क्षणदावशात्, हृदयनायकवत् सुमनोहरम् ॥१॥
सकलपारगताः प्रभवन्तु मे, शिवसुखाय कुकर्मविदारकाः ।
रुचिरमङ्गलवल्लिवने घनाः, दशदिशङ्गमगौरयशोधराः ॥ २ ॥
मदनमानजरानिधनोज्झिता, जिनपते ! तव वागमृतोपमा ।
भवभृतां भवताच्छिवशर्मणे, भवपयोधिपतज्जनतारिका ॥ ३ ॥
जिनपपादपयोरुहहंसिका, दिशतु शासननिर्जरकामिनी ।
सकलदेहभृताममलं सुखं, मुखविभाभरनिर्जितभाधिपा ॥ ४ ॥

( २ )

[ स्रग्धराछन्दः ]

राज्यं राजीमतीं चक्रजरज इवसूत्सृज्य यो यत्र संस्थः,
साम्यश्रीसिद्धसाध्यां विमलसकलसत्केवलालोकलभ्याम् ।
लेभे लोकाग्रलभ्यामपि शिवयुवतिं तन्नवोन्नत्यभाजं,
श्रीनेमिं नौमि तं चाचलकुलतिलकं रैवतं तत्पवित्रम् ॥ १ ॥
पुण्यैः पुण्याऽनुबन्धैरिव भुवनमनो जन्यमानप्रसादैः,
प्रासादैर्वर्द्धमानोदयसुभगतया दूरमभ्रंलिहानैः ।
ये सन्मार्गं दिशन्ते भवगहनजुषां मोहभाजां जनानां,
ते तीर्थेशा जयन्तु त्रिभुवनमहिता उज्जयन्ताऽवतंसाः ॥ २ ॥

शैलश्रीरैवतोर्व्यां समवसृति-शिवानन्दनस्याऽऽस्य-जन्मा,
नव्यां भव्याङ्गिकोटेरिव निजलवतः काञ्चनाभां वितन्वन् ।
लोकं कल्याणपात्रं रस इव विदधे यो महाभाग्यलभ्यः,
श्रीसिद्धान्तः स भूयाद्भुवनभवभृतां दुःखदौर्गत्यभेदी ॥ ३ ॥

या विप्रा साधुदाना त्कुपितपतिकृताऽवज्ञया मुक्तगेहा,
यान्ती श्रीउज्जयन्तेऽनशनविधिभृता तीर्थमाहात्म्ययोगात् ।
देवीत्वं प्राप सद्यस्तदनु कृतरतिस्तत्र तीर्थे कृतज्ञा,
श्रीमन्नेमीशभक्ता भवतु शिवकृते सङ्घलोकस्य साऽम्बा ॥ ४ ॥

( ३ )

( स्रग्धराछन्दः )

सत्पद्याहस्तयुक्तो नगनिकरगडो निर्झरोद्दानवारि,
जीयाच्चैत्योच्चकुम्भो जगति चिरमसावुज्जयन्तो गजेन्द्रम् ।
यत्रोपर्यासनस्थो यदुकुलतिलकः शीलसंवर्मिताऽङ्गो,
नेमिर्विश्वैकवीरस्त्रिभुवनदमनाऽनङ्गजेता चकास्ति ॥ १ ॥

शैलश्रीरैवताऽऽग्र्यजिनगृहविसरो—तुङ्गशृङ्गाग्रसंस्था,
स्फूर्जच्चञ्चन्मरीचिः सुकनककलशश्रेणिरुद्योतिताऽऽशा ।
मोक्षाध्वप्रस्थितानां जगति तनुभृतां दुस्तमःस्तोमभेत्री,
भूयादुच्चस्थितिस्था प्रवरमणिमयी दीप्रदीपालिकेव ॥ २ ॥

सत्सूत्रार्थः सुवर्णोत्तमपदकवराऽलङ्कृतश्रीनिवासो,
नित्यं यो माननीयः सुरनरविसरैर्दैवताऽधिष्ठितश्च ।

सिद्धान्तो ह्यप्रमेयैर्निधिरिव सुमहान्दुःखदौर्गत्यहन्ता,
भव्यानां सोऽस्तु चित्रं परपदमवन्तै यक्षमाभूमिरेषः ॥ ३ ॥
पत्युर्भीतोज्जयन्तं प्रति परिचलिता नेमिनाथं स्मरन्ती,
या देवीत्वं प्रपेदे द्विजवरदयिता मृत्युमासाद्य सद्यः ।
पुत्राङ्का चाऽऽम्रलुम्बी-कलितकरतला प्रौढसिंहाधिरूढा,
कुष्माण्डी नामदेवी दुरितभरहरा साऽस्तु सङ्घस्य नित्यम् ॥ ४ ॥

(४)

(अत्युक्ताजातौ स्त्रीछन्दः)

नेमिं नाथं वन्दे बाढम् ॥ १ ॥
सर्वे सार्वाः सिद्धिं दद्युः ॥ २ ॥
जैनी वाणी सिद्ध्यै भूयात् ॥ ३ ॥
वाणी विद्यां दद्याद् ह्यद्याम् ॥ ४ ॥

(५)

(अत्युक्ताजातौ स्त्रीछन्दः)

नेमिनाथं वन्दे बाढम् ॥ १ ॥
सर्वे सार्वाः शं मे दद्युः ॥ २ ॥
सार्वं वाक्यं कुर्यात् सिद्धिम् ॥ ३ ॥
कल्याणं मे दद्यादम्बा ॥ ४ ॥

(६)

जय नेमिजिनेश्वर ! समुदयसमयाचार ! ॥ १ ॥
यतनाहृतपातक ! केवलकमलागार ! ॥ २ ॥

---

१. इय स्तुतिः पू आ. श्रीविजयसेनसूरीश्वरजी म. शिष्य पू. मुनि श्रीकमलविजयेन कृता ।

वन्दारुसुरासुरविपुलविलासविहार ! ॥ ३ ॥

तीर्थङ्करपदकजपुष्पन्धयमन्दार ! ॥ ४ ॥

## श्रीपार्श्वजिनस्तुतयः ।

### ( १ )

( तोटकछन्दः )

कमठाम्बुदवृद्धिसमाधिकरा—मरभूरुहपल्लवकान्तिहरा ।
जिनपार्श्व ! तवोपरि भाति फणा, नवरत्नरुचिप्रचयैररुणा । ॥ १ ॥

जिनसंहतिरस्तु मुदे भविनः, खलु सज्जनमज्जनसत्कृतिनः ।
प्रप्रकासि दुग्धपयोधि निभा, दिवि तारकतां प्रतिपद्य युवा ॥ २ ॥

वरिवस्यत जैनमताम्बुपतिं, पुरुषोत्तमसेवितगोनिकरम् ।
क्षतदुर्गतिरत्नवितानिकरं, (करुणालिप्रफुल्लकरा)म्बुरुहम् ॥ ३ ॥

बिभृते निभृतालिविकासगृह, वरपुस्तकसन्महनाधिधयो ।
ध्रुवमर्चिततां गिरमध्यधिये, ..................? ॥ ४ ॥

### ( २ )

( स्रग्धराछन्दः )

भां भां भेरीमृदङ्गं पटु पटु हर दद्दरी- कंसनादं,
कसालोत्तारभारारवमुखर वां बद्धकोलाहलं च ।
यस्याग्रे चाऽऽसमन्तात्फणपतिपतितो वादितं सप्रमोदं,
स श्रीमान्पार्श्वनाथः परमसुखमुदं भास्वतं वः प्रदेयम् ॥ १ ॥

पापारिसारिपापा पमपमगरिसा सारिपापाधिमासा,
गागापापामुरारैः समहिममुनिरे नीतिखाखाधिनीते ।
इत्येवं जन्मकाले गिरपतिशिखरे वीणया गीतमिश्रैः,
येषामग्रे प्रमोदात् प्रविदधति सुखं शाश्वतं ते जिनेन्द्राः ॥ २ ॥

वेणावेणीप्रणेद्रैः मधूरवररवं भूरि भास्वत् मृदङ्गं,
पर्यस्तु ध्वस्तकान्तं स्तनतटशुभगं कंसिकोत्तालभारम् ।
वर्तन्तिभिः सलिलं प्रबलबलवशाद् भूतधामाङ्गुलिभिः,
गीर्वन्दे वागभाभिर्यदमलमुरतातज्जिनानां गतं वः ॥ ३ ॥

द्रग्भाद्रिद्भान्द्रिद्रग्भां करमतकरताद्रद्रदोषां ददोषः
रिन्दां रिन्दां द्रिदुर्गां गुडुगुडुगुडुदां द्रःकटैद्रःकटै द्रः ।
एवं वादित्रनादैर्बधिरयति मुदा कानिलैः लावकाशा,
ये यक्षाः स्नात्रकाले विविधपतिपते आर्हतः पात सौवम् ॥ ४ ॥

( ३ )

( द्रुतविलम्बितवृत्तम् )

सकलमङ्गलकेलिनिकेतनं, जिनवरं नवरङ्गधरं परम् ।
नुतिपथं गमयाम्यमयामितं, भुजगकुण्डलिनिपरिसेवितम् ॥ १ ॥

विपुलकेवलकेलिविभासितं, श्रवणमङ्गलकुण्डलतां वहत् ।
सुभगपारगमण्डलमुत्तमं, गुणमणिरमणीयमलं शुभेत् ॥ २ ॥

रसमयः समयः समयः सतां, सरससिद्धरसोपमसङ्गमः ।
जिनमतो वटपाटवमुत्कटं, वहति वर्नसुवर्णगुणालयः ॥ ३ ॥

अर्हद्वक्त्राम्भोजोद्भूतं शाश्वत्पूतं सङ्गीतं,
लक्ष्मीकान्तं वर्णोपेतं वन्दे व्यक्तं सिद्धान्तम् ॥ ३ ॥

भव्यानां भक्तानां कल्याणं कुर्वाणा बिभ्राणा,
शीर्षे शौण्डीरं कोटीरं तारं हारं वक्षोजे।
विख्याता भोगीन्द्रोपेता सालङ्कारा प्रह्लादं,
यच्छन्ती पद्मादेवी सद्बुद्धिं वृद्धिं वैदुष्यम्! ॥ ४ ॥

( ७ )

( ३० यगणगुम्फिता )

चिदानन्दकल्याणवल्लीवसन्तं लसन्तं महाप्रातिहार्यैः प्रधानै-र्निधानैः शिवानां नवानां विशिष्टगरिष्ठैः स्फुरद्भाग्यसौभाग्य-लक्ष्मीं ददानं निदानं जनानां लसद्भक्तिभारैर्भृतानां शिवश्रीर-मायाः क्षमाया अगारं नगाधीशधैर्येण वर्यं,

जगज्जन्तुराजीमनोऽभीष्टसम्पादनप्रौढगीर्वाणवृक्षोपमानं प्र-भावैः प्रभूतैस्त्रिलोकीतलैश्वर्यकारिस्वरूपैः सनाथं सदा विश्व-नाथं यशोभिः सुशोभं समानैरमानैर्निशानाथमन्दारगङ्गातरङ्गो-त्कराणां समन्ताद् भृशं सञ्चरद्भिः शुभाभैः।

नमन्नाकिनाथावलीसेव्यमानं मदक्रोधमायाभयक्लेशमाना-दिदोषद्रुदावानलं प्रत्यलस्फातिभृत्प्रीतिदानैकशुद्धानुभावं भव-द्भोगभङ्गीभिरङ्गीकृतं कान्तिमत्कान्तलावण्यपूरैः पवित्रैः पुनानं समग्रं महीमण्डलं प्रीणयन्तं प्रभाभिः,

प्रसिद्धाश्वसेनक्षमाधीशवंशोदयक्षोणिभृत्शृङ्गारणद्वादशात्मानमात्मानमाशु प्रशस्तं परं सर्वदेवाधिदेवं स्फुरद्विघ्नविध्वंसबद्धावधानं जिनं पार्श्वनाथं नमामि त्रिसन्ध्यं त्रिशुद्धया प्रसिद्धं समग्राग्रिमानन्तसम्पत्कृते भावतोऽहम् ॥ १ ॥

अगाधं स्फुरद्दर्पकन्दर्पपूरैर्भवाम्भोनिधिं नित्यमुक्तावधिं मानमायामदक्रोधनक्रावलीसङ्कुलं शोकसन्तापदुष्टापदालोलकल्लोल—मालाकरालं दुरन्तातुलादृष्टपुष्टाम्बुसम्पत्कराक्रूरविद्युत्कषायैस्तुपातालकुम्भैरिवाकीर्णमध्यं,

जराजातिपाठीनपीठोत्कटं सङ्कटं मोहवल्लीवितानैर्भृशं सर्वतः पूरितं भूरितृष्णापयोभिः प्रभूतैः प्रचण्डैः कुबोधोद्धुतोर्वाग्निदुःसञ्चरं सञ्चरन्मत्सरातुच्छमत्स्यैर्भयोद्भूतिकृद्दर्शनं सत्वरं भव्यजीवा न के के तरन्ति प्रमोदात् समग्राः ? ।

यदीय पदाम्भोजमासाद्य पोतोपमानं लसद्भव्यनानागुणश्रेणिमाणिक्यमालाभिरालिङ्गितं सङ्गतं विश्वशस्यश्रिया सश्रितं सर्वदा बुद्धिवृद्धैः समृद्धैः प्रबुद्धैर्विशुद्धार्थसार्थप्रदं देवताऽधिष्ठितं सत्कृतं लक्षणानां समाजैः प्रक्लृप्तोत्सवाद्यैः,

मम श्रीजिनेन्द्राः सुरेन्द्रावलीनम्यमाना अमाना महोभिर्महद्भिर्जनानन्ददानप्रवीणैर्नवीनैर्जगज्जन्तुसन्तापविध्वंसकृद्वाग्विलासा निवासाः स्फुरच्छर्मलक्ष्म्या अभङ्गोत्तमानन्तसद्भाग्यसम्भारलभ्याः सृजन्तु प्रकामं मनोवाञ्छितं ते समग्रम् ॥ २ ॥

कनककुण्डलिनीनलिनीसमा, सदमरी भ्रमरी मधुरी कृता।
अमलकेवलकोमलपद्मभृत्, जय जयारव केसरसाररुग् ॥ ४ ॥

(४)

(मालिनीछन्दः)

कृतजलधरधारा–धोरणीरुद्धदेहो,
जयति जयति कायोत्सर्गकाले सपार्श्वः ।
किमु शमरसमग्नो नूनमाकण्ठमेतां,
जनयति जनशङ्कां कान्तिकान्ताङ्गलक्ष्मीः ॥ १ ॥

विरचितहेमांभोजबद्धप्रचारा,
विहरणभुवि येषां सूचयन्त्यंह्रिपद्माः ।
विमलकमलजालं निर्जितं तेन चास्मान्,
महति शिरसि सोऽयं जैनवर्गः पुनातु ॥ २ ॥

समवसरणभूमौ यां निशम्यामरेन्द्राः,
दधति पुलकजालं चित्तविद्रवचित्ताः ।
उपशमरसधाराऽऽसारधारच्छटाभिः,
प्रकटितपुलका किं जैनगीः सा पुनातु ॥ ३ ॥

नमदमरपुरंध्रीभूरिभालाग्रजाग्रन्–
मृगमदपददम्भात्पादपीठे दधौ या ।
नतजनपठनाऽवच्छेदिकर्माणि बध्वा,
विनयिनि मयि सा गीर्जाड्यजालं च्छिनत्तु ॥ ४ ॥

( ५ )

( उपजातिवृत्तम् )

श्रेयःश्रियां मङ्गलकेलिसद्म !, श्रीयुक्तचिन्तामणीपार्श्वनाथ ! ।
दुर्वारसंसारभयाच्च रक्ष, मोक्षस्य मार्गे वरसार्थवाह ! ॥ १ ॥
जिनेश्वराणां निकर ! क्षमायां, नरेन्द्रदेवेन्द्रनतांह्रिपद्म ! ।
कुरुष्व निर्वाणसुखं क्षमाभृत् !, सत्केवलज्ञानरमां दधान ! ॥ २ ॥
कैवल्यवामाहृदयैकहार !, क्षमासरस्वद्रजनीशतुल्य ! ।
सर्वेश ! सर्वातिशयप्रधान !, तनोतु ते वाग् जिनराज ! सौख्यम् ॥ ३ ॥
श्रीपार्श्वनाथक्रमणाऽम्बुजात-सारङ्गतुल्यः कलधौतकान्तिः ।
श्रीयक्षराजोगरुडाभिधानः, चिरं जय ज्ञानकलानिधान ! ॥ ४ ॥

( ६ )

श्रीसर्वज्ञं ज्योतीरूपं विश्वाधीशं देवेन्द्रं,
काम्याकारं लीलागारं साध्वाचारं श्रीतारम् ।
ज्ञानोदारं विद्यासारं कीर्तिस्फारं श्रीकारं,
देवैर्वन्द्यं सानन्दं भक्त्या वन्दे श्रीपार्श्वम् ॥ १ ॥
जाग्रद्दीपे जम्बूद्वीपे स्वार्णशैले श्रीशृङ्गे,
चञ्चच्चक्रे ज्योतिश्चक्रे तुङ्गत्वाढ्ये वैताढ्ये ।
श्रेयस्कारे वक्षस्कारे देवावासे सोल्लासे,
ये वर्तन्ते सार्वाऽधीशास्ते सौख्यं वो देयासुः ॥ २ ॥
सम्यग्ज्ञानं शुद्धध्यानं श्रुत्वा ध्यानं सन्मानं,
त्रैलोक्यश्रीरामारम्यं विद्वद्गम्यं प्रागम्यम् ।

अर्हद्वक्त्राम्भोजोद्भूतं शाश्वत्पूतं सङ्गीतं,
लक्ष्मीकान्तं वर्णोपेतं वन्दे व्यक्तं सिद्धान्तम् ॥ ३ ॥

भव्यानां भक्तानां कल्याणं कुर्वाणा बिभ्राणा,
शीर्षे शौण्डीरं कोटीरं तारं हारं वक्षोजे ।
विख्याता भोगीन्द्रोपेता सालङ्कारा प्रह्लादं,
यच्छन्ती पद्मादेवी सद्बुद्धि वृद्धि वैदुष्यम् ! ॥ ४ ॥

( ७ )

( ३० यगणगुम्फिता )

चिदानन्दकल्याणवल्लीवसन्तं लसन्तं महाप्रातिहार्यैः प्रधानै-र्निधानैः शिवानां नवानां विशिष्टगरिष्ठैः स्फुरद्भाग्यसौभाग्यलक्ष्मीं ददानं निदानं जनानां लसद्भक्तिभारैर्भृतानां शिवश्रीरमायाः क्षमाया अगारं नगाधीशधैर्येण वर्यं,

जगज्जन्तुराजीमनोऽभीष्टसम्पादनप्रौढगीर्वाणवृक्षोपमानं प्रभावैः प्रभूतैस्त्रिलोकीतलैश्वर्यकारिस्वरूपैः सनाथं सदा विश्वनाथं यशोभिः सुशोभं समानैरमानैर्निशानाथमन्दारगङ्गातरङ्गोत्कराणां समन्ताद् भृशं सञ्चरद्भिः शुभाभैः ।

नमन्नाकिनाथावलीसेव्यमानं मदक्रोधमायाभयक्लेशमानादिदोषद्रुदावानलं प्रत्यलस्फातिभृत्प्रीतिदानैकशुद्धानुभावं भवद्भोगभङ्गीभिरङ्गीकृतं कान्तिमत्कान्तलावण्यपूरैः पवित्रैः पुनानं समग्रं महीमण्डलं प्रीणयन्तं प्रभाभिः,

प्रसिद्धाश्वसेनक्षमाधीशवंशोदयक्षोणिभृत्शृङ्गारणद्बादशात्मा-नमात्मानमाशु प्रशस्तं परं सर्वदेवाधिदेवं स्फुरद्विघ्नविध्वंसबद्धा-वधानं जिनं पार्श्वनाथं नमामि त्रिसन्ध्यं त्रिशुद्धया प्रसिद्धं समग्राश्रिमानन्तसम्पत्कृते भावतोऽहम् ॥ १ ॥

अगाधं स्फुरद्दर्पकन्दर्पपूरैर्भवाम्भोनिधिं नित्यमुक्तावधिं मानमायामदक्रोधनक्रावलीसङ्कुलं शोकसन्तापदुष्टापदालोलक-ल्लोल--मालाकरालं दुरन्तातुलादृष्टपुष्टाम्बुसम्पत्कराक्रूरविद्युत्कषायै-स्तुपातालकुम्भैरिवाकीर्णमध्यं,

जराजातिपाठीनपीठोत्कटं सङ्कटं मोहवल्लीवितानैर्भृशं सर्वतः पूरितं भूरितृष्णापयोभिः प्रभूतैः प्रचण्डैः कुबोधोद्धुतो-र्विभिदुःसञ्चरं सञ्चरन्मत्सरातुच्छमत्स्यैर्भयोद्भूतिकृद्दर्शनं सत्वरं भव्यजीवा न के के तरन्ति प्रमोदात् समग्राः २।

यदीय पदाम्भोजमासाद्य पोतोपमानं लसन्नव्यनानागुण-श्रेणिमाणिक्यमालाभिरालिङ्गितं सङ्गतं विश्वशस्यश्रिया सश्रितं सर्वदा बुद्धिवृद्धैः समृद्धैः प्रबुद्धैर्विशुद्धार्थसार्थप्रदं देवताऽधिष्ठितं सत्कृतं लक्षणानां समाजैः प्रक्लृप्तोत्सवाद्यैः,

मम श्रीजिनेन्द्राः सुरेन्द्रावलीनम्यमाना अमाना महो-भिर्महद्भिर्जनानन्ददानप्रवीणैर्नवीनैर्जगज्जन्तुसन्तापविध्वंसकृद्धा-ग्विलासा निवासाः स्फुरच्छर्मलक्ष्म्या अभङ्गोत्तमानन्तसद्भाग्य-सम्भारलभ्याः सृजन्तु प्रकामं मनोवाञ्छितं ते समग्रम् ॥ २ ॥

अनेकान्तसद्वादमूलं जगन्नाथदत्तत्रिपद्येकबीजं गणाधारमुख्यैः कलालब्धलक्षैरिवारामिकै रोपितं सर्वसम्पत्तिजाताभिलाषोद्यतिर्निस्तुषादूष्यवैदूष्यशिष्यव्रजक्षोणिपीठे प्रकृष्टोत्तमानन्तसद्भक्तिपूरैः सदार्द्रश्रियं श्रीयमाणे,

स्फुटानित्यनित्यादिवादस्थलैः प्रत्यलैस्तार्किकश्रेणिसंशीतिदाघौघविच्छेदलीलाविधौ वेदसंख्यैः ककुन्मण्डलव्यापकैः प्रौढशाखाकुलैः शोभमानं समानन्दितानेकलोकं निजच्छायया स्वच्छया संहरन्तं दुरन्तं ततव्यापतापप्रचारं प्रभूतम् ।

अनन्तागमासङ्ख्यपर्यायवर्यप्रसर्पल्लसत्पल्लवैः प्रीणयन्तं सकर्णव्रजैस्तूर्णमावर्ण्यमानैरमानैर्बुधाधीशनेत्राणि सच्चित्रकृद् व्यक्तिभृद्युक्तिभृद्युक्तिसंयुक्तवाक्यावलीपत्रराजीपवित्रप्रभं निवृत्तेः कारणं वारणं व्यापदां सन्ततेः सर्वकालं,

जिनेन्द्रागमं सङ्गमं शुद्धसिद्धेः सुपर्वद्रुमं न्यायपुष्पावलीसङ्कुलं मञ्जुलं भङ्गजालप्रतानैः सदा सर्वतः सेव्यमानं मुनीशैः स्वपक्षद्वयीराजमानैर्मनोऽभीष्टसृष्टिपरिष्टं श्रयेऽहं फलैः पूरितं विश्वविश्रामभूमिं मरुन्मण्डलीरक्ष्यमाणम् ॥ ३ ॥

चलत्कुण्डलामण्डिता खण्डितानेकशत्रुप्रचारा विचाराश्रिताऽगण्यलावण्यपूरप्रवाहैर्नवा हेमसौदर्यवर्यस्वदेहप्रभाभिः शुभाभिः प्रभावैः प्रभूतैर्विभूतिप्रदैः प्रीणयन्ती मुनीनां समाजं समाजन्यमानाश्रितश्रेणिरक्षा कलौ कल्पवृक्षा,

स्फुरद्व्यक्तमुक्ताफलोदारहारश्रिया सङ्गता चङ्गतारुण्य-
व्यालया लीलया सञ्चरन्ती चरन्ती द्विषां प्रौढिरूढानुभावं
भावन्नताशेषगीर्वाणवर्णा सुवर्णाचलौपम्यभृद् धैर्यसौन्दर्यगाम्भी-
तेजोभरैः सुन्दरैर्निभरं संश्रयन्ती महत्त्वम् ।

क्वणन्नूपुरालङ्कृता न्यक्कृताराातिजाताऽद्भुता नागिनी-
जिसम्पूजिता तर्जितापारविघ्नप्रकारा महामत्तमातङ्गरङ्गद्ग-
तिप्राञ्जला विश्वविख्यातकीर्त्या शशाङ्कं जयन्ती जगद् रञ्जयन्ती
यं भञ्जयन्ती कुतीर्थप्रभूणां परेषां समेषां,

मम श्रीनिवासा नगाधीशपत्नी घटाकोटिसाम्राज्यलक्ष्मीं
श्रयन्ती नयन्ती सदैवोन्नतिं शासनं पार्श्वनाथस्य देवाधिदेवस्य
नित्यं मनश्चिन्तितं सत्वरं देवतामुख्यपद्मावती स्वामिनी विश्व-
माता ददातु त्रिलोकोत्तमं पुण्यकारुण्यपण्यार्पणाभा ॥ ४ ॥

[ ८ ]

( अत्युक्ताजातौ स्त्रीछन्दः )

पार्श्वः प्रभुः जीयान्नित्यम् ॥ १ ॥
सार्वः सङ्घः दद्याच्छं मे ॥ २ ॥
अर्हद्वाक्यं सिद्धिं दद्यात् ॥ ३ ॥
भद्रं नित्यं देयात् पद्मा ॥ ४ ॥

[ ९ ]

( शार्दूलविक्रीडितवृत्तम् )

*कल्याणानि समुल्लसन्ति जगतां दारिद्र्यविद्रावण–
द्राघीयः पदवीप्रवर्हघटनाकल्याणकल्पद्रुमात् ।
कल्याणप्रगुणीभवत्प्रवचनश्रीसिद्धसारस्वत–
श्रीमत्पार्श्वजिनेश्वरस्मरणतः कल्याणमाहात्म्यतः ॥ १ ॥

[ १० ]

( उपजातिवृत्तम् )

*[1]श्रीपार्श्वनाथा!ऽऽगम! वीतराग-चया!ऽभिवन्द्याऽऽनतनाकिनाग!।
समस्तभद्रोदयपारिजात!, जय क्षितौ त्वं दितवैरिजात! ॥ १ ॥

[ ११ ]

( उपजातिवृत्तम )

[2]अघौघवल्लिच्छिदिशातपार्श्व!, सम्पादितानन्दपदैकपार्श्व!।
श्रीपार्श्व! चञ्चत्समय! स्वयम्भो, सर्वज्ञजात स्तुत! शं विधेहि ॥ १ ॥

---

* इयं स्तुतिः चर्तुशः उच्यते ।

१ प्रथमस्तुतौ हे श्रीपार्श्व! त्वं जय। द्वितीयायां हे वितरागचय! त्वं जय। तृतीयायां हे नाथाऽऽगम! त्वं जय। चतुर्थ्यां हे आनतनाकिनाग! त्वं जय।

२ प्रथमस्तुतौ हे श्रीपार्श्व! शं विधेहि। द्वितीयायां हे सर्वज्ञजात! शं विधेहि। तृतीयायां हे चञ्चत्समय! शं विधेहि। चतुर्थ्यां हे श्रीपार्श्वनामायक्ष! शं विधेहि।

( अत्युक्ताजातौ स्त्रीछन्दः )

कुर्यात् पार्श्वः पापध्वंसम् ।। १ ।।
सर्वे सार्वाः सिद्धिं दद्युः ।। २ ।।
अर्हद्वाचं वन्देऽजस्रम् ।। ३ ।।
स्फूर्जत्सद्मा जीयात् पद्मा ।। ४ ।।

## कंसारीपुरमण्डनश्रीपार्श्वजिनस्तुतिः ।

*सकलजिनराजकोटीरहीराङ्कुरं, पार्श्वपरमेश्वरं समयकमलाकरम् ।
स्मरत कंसारिपुररत्नतिलकोत्तरम् विजयलक्ष्मीवरं नीलरुचिसुन्दरम् ।१।

## श्रीशङ्खेश्वरपार्श्वजिनस्तुतिः ।

( १ )

( द्रुतविलम्बितवृत्तम् )

मदमहीधरदारणसत्पविं, मदनमत्तमतङ्गजसत्सृणिम् ।
रुचिरशङ्खपुरी भुवि नायकं, जिनवरं प्रणमामि सुखप्रदम् ।।१।।
विमतिकर्दमशोषणभास्कराः, विविधविज्ञवितानसुसेविताः ।
कठीनकर्ममहीरुहसिन्धुराः, जिनवरा विभवाय भवन्तु मे ।।२।।
जिनवरैर्गदितं सुजिनाऽऽगमं, विपुलभङ्गसुसङ्गसमन्वितम् ।
विविधजीवदयारसबन्धुरं, सकललोकहितं प्रणम्याम्यहम् ।। ३ ।।

---

*इयं स्तुतिः चतुर्शः उच्यते ।
१ पू.आ.श्री विजयसेनसूरीश्वरजीम. शिष्य कमलविजयेन कृता।

प्रभुपदाऽम्बुजभृङ्गसमोपमो, निखिलविघ्नविघातनसोद्यमः ।
प्रवरशङ्खपुरीस्थजिनानुगः, स मम पार्श्वसुरोऽस्तु सुखप्रदः ॥४॥

( २ )

( शार्दूलविक्रीडितवृत्तम् )

*श्रीशङ्खेश्वरमण्डनं जिनवरं पार्श्वं स्तुवे कामदं,
श्रीमन्तोऽन्यजिनेश्वरा जगति ये तान्नौम्यहं सर्वदा ।
कल्याणाऽऽस्पददायकं नतसुरं वन्दे तथा चाऽऽगमं,
श्रीपद्मावतीदेवते ! भव सदैवाऽमेधशिण्ये शुभा ॥ १ ॥

## जेसलमेरमण्डनश्रीपार्श्वजिनस्तुतिः ।

( द्रुतविलम्बितवृत्तम् )

शमदमोत्तमवस्तुमहापणं, सकलकेवलनिर्मलसद्गुणम् ।
नगरजेसलमेरविभूषणं, भजत पार्श्वजिनं गतदूषणम् ॥ १ ॥

सुरनरेश्वरनम्रपदाम्बुजाः, स्मरमहीरुहभञ्जमतङ्गजाः ।
सकलतीर्थकराः सुखकारका, इह जयन्ति जगज्जनतारकाः ॥२॥

श्रयति यः सुकृती जिनशासनं, विपुलमङ्गलकेलिविभासनम् ।
प्रबलपुण्यरमोदयधारिका, फलति तस्य मनोरथमालिका ॥३॥

विकटसङ्कटकोटिविनाशिनी, जिनमताश्रितसौख्यविकाशिनी ।
नरनरेश्वरकिन्नरसेविता, जयतु सा जिनशासनदेवता ॥ ४ ॥

---

* इयं स्तुतिः चतुर्शः उच्यते ।

## श्रीअजारापार्श्वजिनस्तुतिः ।

( द्रुतविलम्बितवृत्तम् )

नमत पार्श्वजिनं जगदीश्वरं, सुरवरैः स्तुतपादसरोरुहम् ।
निजयशो–धवलीकृतविष्टपं, लसदजापुरचारुविभूषणम् ॥ १ ॥

ददतु मे परमां सुखसम्पदं, जिनवरा जितमोहमहाभटाः ।
कुसुमबाणगजेन्द्रगजारयः, सकलमङ्गलवल्लिवनोपमाः ॥ २ ॥

जिनवरागमवारिधरो वरो, जयतु लोकमनोमलशोधकः ।
विविधभद्रमहीरुहवर्धकः, भविकलोकमयूरसुमोदकः ॥ ३ ॥

वितनुतां धरणेन्द्रवधूः सदा, परमुदं भविकस्य नताऽमरा ।
सुरवधूव्रजसेवितसत्पदा, सकलविघ्नविनाशनतत्परा ॥ ४ ॥

## श्रीवर्धमानजिनस्तुतयः ।

( १ )

( शार्दूलविक्रीडितवृत्तम् )

पद्माऽऽस्ये शतपत्रपत्रनयने कुम्भीनकुम्भस्तने,
रम्भास्तम्भनिभोरुचारुचरणे सन्नाकनारीजने ।
लास्यं यस्य कलाकलापकुशले कुर्वत्यपि ध्यानत–
श्चेले नाऽचलनिश्चलेन मनसा जीयात्स वीरो जिनः ॥ १ ॥

जन्मस्नात्रविधौ विधूततमसा येषामशेषं जगत्,
जातं जातमहोदयं दितिसुताऽऽरातीयसलोकोपमम् ।

१ इयं स्तुतिः पू. मुनिराजश्रीशान्तिविमलेन कृता ।

नम्राखण्डलमण्डलामलगलत्सन्मौलिमालावली,
गाढालीढसरोजचारुचरणास्ते पान्तु वस्तीर्थपाः ॥ २ ॥

व्रजति भवसमुद्रं द्राक् विलंध्यातिरौद्रं,
शिवपदमनवद्यं विश्वविश्वेन वन्द्यम् ।
विलसदतुलसत्त्वोऽयं भजन् भव्यसत्त्वो,
दिशतु स शिवशर्म प्राणिनां जैनधर्मः ॥ ३ ॥

यस्या भाति करे विकासिकमलं वृन्दैरलीनां वृतं,
सद्युक्तिप्रभवादिवादिविभवाद् धामत्वमुच्चैर्गतम् ।
सा देवी विकचारविन्दविलसन् नेत्रा त्रिलोकैः स्तुता,
हस्तन्यस्तसुपुस्तकाऽस्तु भवतां विध्वस्तमोहा सदा ॥ ४ ॥

[ २ ]

( उपजातिवृत्तम् )

नम्रेन्द्रमौलिप्रपतत्पराग-पुञ्जस्फुरत्कर्बुरितक्रमाब्जम् ।
वीरं भजे निर्जितमोहवीरं, संसारदावानलदाहनीरम् ॥ १ ॥

पुंष्पौघपद्मदलसौरभगुण्ठितानि, स्वर्णाम्बुजैः सुरकृतैःपरिमण्डितानि।
वन्देऽर्हतां वरपदानि नतान्यजेन, भावावनामसुरदानवमानवेन॥२॥

नानारत्नैः सुभगमतुलप्रौढसादृश्यपाठै—
र्विज्ञज्ञातैर्बहुनयभरैः सत्तरङ्गैरुपेतम् ।

१ मालिनीछन्दः । २. वसन्ततिलकावृत्तम् ।
३. मन्दाक्रान्तावृत्तम् ।

युक्त्या जैनं समयमुदधिं कीर्त्तयाम्यस्मि कामं,
बोधागाधं सुपदपदवीनीरपूराभिरामम् ॥ ३ ॥
श्रीमद्वीरक्रमाम्भोरुहरसिकमना राजहंसीव रम्या,
सिद्धा सिद्धाविरुद्धा विशदगुणलसद्भक्तहृत्पद्मरुद्धा ।
या धत्ते स्वीयकण्ठे घनसुरभिरसां पुष्पमालां विशालां,
आमूलालोलधूलीबहुलपरिमलालीढलोलालिमालाम् ॥ ४ ॥

( ३ )

( शार्दूलविक्रीडितम् )

[२]स्फूर्जद्भक्तिनतेन्द्रशीर्षविलसत्कोटीररत्नावली–
रंङ्गत्कान्तिकरम्बिताऽद्भुतनखश्रेणिसमुज्जृम्भितम् ।
सिद्धार्थाङ्गरुहस्य कीर्तितगुणस्यांह्रिद्वयं पातु वः,
स्नातस्याप्रतिमस्य मेरुशिखरे शच्या विभोः शैशवे ॥ १ ॥
श्रेयःशर्मकृते भवन्तु भवतां सर्वेऽपि तीर्थाधिपाः,
येषां जन्ममहः कृतः सुरगिरौ वृन्दारकैः साऽऽदरैः ।
पौलोमीस्तनगर्वखण्डनपरैः कुम्भैः सुवर्णोद्भवैः,
हंसांसाहतपद्मरेणुकपिशक्षीरार्णवाम्भोभृतैः ॥ २ ॥
[३]सेवे सिद्धान्तमुद्यत्सकलमुनिजनप्रार्थितामर्त्यरत्नं,
गर्जद्वाचाटवादिद्विरदघनघटादर्पकण्ठीरवाऽऽभम् ।

---

१. स्रग्धराछन्द. । २. पू. मुनिराजश्रीगुणविजयगणिनाकृतेयं स्तुतिः । ३. स्रग्धराछन्दः ।

मिथ्याधर्मान्धकारे स्फुटविकटकरादित्यमल्पप्रभं नो,
अर्हद्वक्त्रप्रसूतं गणधररचितं द्वादशाङ्गं विशालम्  ॥ ३ ॥
दक्षो यक्षाऽधिराजो महिमगुणनिधिश्चण्डदोर्दण्डधारी,
सर्वं सर्वानुभूतिर्विदलयतु मुदा सङ्घविघ्नं महौजाः ।
अध्यारूढो द्विपेन्द्रं वरभवनगतस्तम्भहस्तोत्कटाऽऽस्यं,
निष्पङ्कव्योमनीलद्युतिमलसदृशं बालचन्द्राभदंष्ट्रम्  ॥ ४ ॥

( ४ )

( वसन्ततिलकावृत्तम् )

कल्याणमन्दिरमुदारमवद्यभेदि, दुष्कर्मवारणविदारणपञ्चवक्त्रम् ।
यत्पादपद्मयुगलं प्रणमन्ति शक्राः, स्तोष्ये मुदाजिनवरंजिनत्रैशलेयम्॥ १ ।
क्षीणाष्टकर्मनिकरस्य नमोऽस्तु नित्यं, भीताभयप्रदमनिन्दितमंघ्रिपद्मम् ।
इष्टार्थमण्डलसुसर्जनदेववृक्षं, नित्योदयं दलिततीव्रकषायमुक्तम् ॥२॥
जैनागमं दिशतु सर्वसुखैकदारं, श्रीनन्दनक्षितिजहव्यहतिप्रकारम् ।
संसारसागरनिमज्जदशेषजन्तु-वोहित्थसन्निभमभीष्टदमाशुमुग्धम् ॥३॥
मातङ्गयक्षरमलं प्रकरोति सेवां, पूर्वान्तमारसमभीप्सितदं विशालम् ।
उत्पत्तिविस्तरनदीशपतज्जनानां, पोतायमानभिनम्य जिनेश्वरस्य ॥४॥

( ५ )

( मालिनीछन्दः )

कनकसमशरीरं, प्राप्तसंसारतीरं,
कुमतघनसमीरं, क्रोधदावाग्निनीरम् ।

जलधिजलगभीरं, दम्भभूसारसीरं,
सुरगिरिसमधीरं, स्तौमि भक्त्या च वीरम् ॥ १ ॥

नमदखिलसुरेन्द्राः, पापपङ्के दिनेन्द्राः,
कुमतमृगमृगेन्द्राः, कर्मवृक्षे गजेन्द्राः ।
सुगुणमणिसमुद्राः, साधुचकोरचन्द्राः,
गतघनतरतन्द्राः, पातु वः श्रीजिनेन्द्राः ॥ २ ॥

जिनवदनह्रदान्तात्, निर्गता वाद्धिकान्ता,
सुपदसलिलपूता, पापपङ्कौघहर्त्री ।
जननमरणनित्या, द्वादशाङ्गी विचित्रा,
मुनिजनहितकर्त्री मोक्षसौख्यप्रदात्री ॥ ३ ॥

जितनयनकुरङ्गी, श्यामवेणीभुजङ्गी,
जिनमुखकजभृङ्गी, श्वेतवस्त्रैर्वृताङ्गी ।
निविडजडिमरोग—ध्वंसने मातुलिङ्गी,
श्रुतनिचयवराङ्गी, देहि मे देवी सद्गीः ॥ ४ ॥

( ६ )

( भुजङ्गप्रयातवृत्तम् )

मुदोन्निद्रयोगीन्द्रहृद्ध्यायमानं, परिध्वस्तमानं सुरैर्गीयमानम् ।
लसन्मानवामानवामानमानं, भजे वर्द्धमानं भजे वर्द्धमानम् ॥१॥

---

१. उत्पादव्ययध्रुवरूपा इत्यर्थः ।

जिनाधीशलेखा नताशेषलेखा, नतद्वेषदोषप्रदोषांशुलेखा ।
स्मृता येन तं निःप्रतीपं प्रतीत्य,कलं कोमलं कोमलं कोऽप्यलं स्यात् ।२।
महावीरवाणीगुणो वर्णवर्ण्यः, सकर्णेन नाकर्णितो येन तूर्णम् ।
स धूर्णन्महामायया मन्यतेऽसा–रसंसारसंसारसंसारसारम् ॥३॥
सुधर्मासुराणामधीशः शचीनां, शुचिप्रेमनर्मादि सौख्यं विहाय ।
जिनाधीशसेवाविधौ यः प्रसक्तः, सुदेवः सुदेवः सुदेवः सुदैव ॥४॥

( ७ )

( मालिनीछन्दः )

मदनदहननीरं क्रोधयोद्धैक वीरं,
मदजलदगमीरं दम्भभूभेदसीरम् ।
जलधिगुरुगभीरं लब्धलोभाब्धितीरं,
कनकरुचिशरीरं श्रीजिनं नौमि वीरम् ॥ १ ॥

हृतविषयविकाराः कर्मवल्लिकुठारा
नतसुरनरवाराः प्राप्तसंसारपाराः ।
सुखमतुलमुदारास्तीर्थपालोकसारा
ददत शिववधूराः मण्डनास्तारहाराः ॥ २ ॥

नमदमरसुरेन्द्रं प्राप्तसम्मोहनेन्द्रं,
सुगुणमणिसमुद्रं यत्कृपायादिरौद्रम् ।
नमत विहितभद्रं सत्वपीडादरिद्रं,
क्रमणकमलचन्द्रं शासनं जैनचन्द्रम् ॥ ३ ॥

जिनपतिनतिदक्षः प्लुष्टमिथ्यात्वकक्षः,
प्रणयिविहगवृक्षः स्मेरपद्मोपलक्षः ।
विचितकुशलपक्षः सद्यशोभिर्विलक्षः,
प्रवचनकृतरक्षः सोऽस्तु सर्वाणुयक्षः ॥ ४ ॥

( ८ )

( गगनदण्डकच्छन्दः )

त्रिभुवनविभ (भो+ई) वीप्सितार्थप्रथाप्रत्यलत्वातिकल्पद्रुमोग्रप्रभावस्फुरत्सौरभाद्यत्क्रमाम्भोजरोलम्बलीलावलम्ब्युल्लसद्भक्तिसन्नम्रनाकाधिराट्-नरपतिततिमौलिसन्मौलिभास्वत्प्रभाजालविद्योतितोपान्तदेशस्त्वमर्हं-स्त्रिलोकैकबन्धो ! धराधीशसिद्धार्थवंशाग्रभूषामणे ! वर्धमानप्रभो ! ।
कुवलयवनकोकिलश्यामलागाधमोहान्धकारप्रचारापहार्कबिम्बोपमापारकारुण्यपाथोनिधे ! धाम ! धाम्नां विधेहि प्रसद्याशु मे बिभ्रतः, सुकरुणरसगोचर ! त्वं चिरं भीष्मसंसारकान्तारवासोद्भवैर्दुःखपूरैःश्रित-स्याधुना पादयुग्मं त्वदीयं कथञ्चित् पुराणैरगण्यैः सुपुण्यैः शिवम् ॥१॥
वितरतु मम निवृत्तेः शर्म सा सन्ततिस्तीर्थराजां विचक्रे सुपर्वेश्वरैः देशनासद्म यस्यास्तदेकश्रिया भ्राजितं भाभराभ्रंलिहाद्भ्रवपत्रयी-परिगतमुरु किन्नरस्त्री समारब्धगीतिप्रतिश्रुन्निनादौघवाचालिताशा-न्तरालं प्रमोदातिरेकात् प्रनृत्यत् सुरालीक्रमाघातसंक्षुब्धगोत्राचलम् ।

---

१. पू. आ. श्रीमुनिसुन्दरसूरीश्वरजीमहाराजकृतेयं स्तुतिः ।

त्रिदशततिभिराहितोद्दामवादित्रचक्राऽद्भुतैर्यत्र कोलाहलैः स्फुरति सु-
विस्तृतैर्नाकिनाथोच्चितोद्यत्पताकावलीनद्धसत्किङ्किणीनिःक्वणैः सद्गतै-
स्तरङ्गिततरस्तारमीयुस्तुरङ्गाः किलाहर्मणेर्यानयुग्मास्तथा त्रासमत्यु-
द्भुतं नैव कुत्राप्यवस्थानमेकत्रसम्प्राप्नुयुस्ते तथाऽद्यापि भीता इव ।२।
भवतु भवभिदे ममानन्तसङ्ख्यार्थवाचाक्षरालीजलागाधमध्यो जि-
नेन्द्रूक्तसिद्धान्तपाथोनिधिर्धीवरैरप्यगम्यस्तनूमत्कृपोल्लासिवेलाकुलो,
बहुविधनयभङ्गकाऽप्रत्नरत्नोत्कराभ्राजितोऽप्राप्तपारः सुपाठीनमालाभि-
रप्युल्लसद्धेतुरङ्गत्तरङ्गावलीमालितः प्राज्ययुक्तिप्रथाशुक्तिभृत् ।
पृथुचतुरनुयोगदीर्घतत्तटः स्पष्टदृष्टान्तमुक्ताकलापाचिताङ्गप्रदेशो मुनी-
न्द्रादिसद्वृत्तसर्पत्तिमिश्रेणिभिः सङ्कुलः श्रीनिवासो गम्भीरत्वभृ-
द्विबुधजनमनोमुदुल्लासनप्रत्यलप्रेङ्खद्धिप्रमाणौघकेलिमहाभूमिभृद्धो-
रणीबन्धुरः सूक्तसन्दोहभास्वत्प्रवालालयो देवताऽधिष्ठितः ॥ ३ ॥
अपहर भयमम्भसा सम्भृतस्य भ्रमोद्रेकरूपेण संसारपाथोनिधेर्वी-
तरागोक्तसिद्धान्तबोधप्रथायानपात्रप्रदानेन वाग्देवि ! विश्वार्चिते !,
सुमधुरगति निःस्वनं हंसमधिरूढवत्यङ्गिनां स्वं शिवाकाङ्क्षिणां लोल-
रोलम्बझङ्काररवैरिवागीयमानोल्लसत्सौरभं बिभ्रती पुण्डरीकं करे ।
सितकरहारनीहारशुभ्रप्रभाभासमाने ! नरोल्लसिभक्त्या नमन्नाकिना-
गाङ्गनाचक्रवालोत्तमाङ्गच्युतोदारसिन्दूररेणूत्करै-
रुणितमभिधारयन्ती क्रमद्वन्द्वमज्ञानविद्वेषिणि ! क्रोधपूरादिवाशेष-
विश्वत्रयीबोधिरत्नापहारप्रगल्भस्फुरद्धिक्रमोद्दण्डचापोत्कटे ॥ ४ ॥

( मालिनीछन्दः )

१रुचिररुचिरुचस्ते वर्धमानाक्षरश्री-
दयितदयितभव्याः श्रेयसः शासनस्य ।
परमपरमतश्रीजैत्रभक्तः सदा स्या-
मुदयमुदयपात्रं यल्लभे शर्म नित्यम् ॥ १ ॥

महायतमहायतच्चरणवन्दनाः श्रीजिनाः,
सदोदयसदोदयप्रथितशुद्धपुण्यागमाः ।
सुभावसुभाववर्त्तित्रदशराजवृन्दार्चिताः,
सुरोचितसुरोचितप्रचितदामभिः पान्तु माम् ॥ २ ॥

२सन्तः सन्ततशर्मणे दधति यं धीरोचिधीरोचितं,
श्रीदश्रीदमदर्शकं हृदि सते सम्पन्नसम्पन्नतः ।
प्राणिप्राणितदानवाग्वितनुतां सर्वज्ञसर्वज्ञराट्,
श्रेयःश्रेयसि वासकानि समयः पुण्यानि पुण्यानि मे ॥ ३ ॥

३कारं कारं जिनानामतिमतिविभवा ये स्तवं वास्तवं वा,
साराः साराः स्वभक्तेहितहितविपिने स्युः समानाः समानाः ।
क्रीडाक्रीडामहिम्नां स्रसरतिसुरीराज्यः श्रीजयश्री-
श्रेयः श्रेयस्विनस्तेऽसुरसुरपतयो मे क्रियासु क्रियासुः ॥ ४ ॥

---

१ पू. आ. श्रीमुनिसुन्दरसूरीश्वरजीमहाराजकृतेयं स्तुतिः ।
२ शार्दूलविक्रीडितवृत्तम् । ३ स्रग्धराछन्दः ।

( १० )

( आर्याछन्दः )

रुचिराजी रुचिराऽजीहित नोहितनोदकोदकोपमित ! ।
पङ्के पङ्केऽपङ्केहित ! हि तवावीरवाऽ ! वीर ! ॥ १ ॥
विश्वं विश्वं विश्वम्भर ! भर ताऽनत ! न तामसाऽराम ! ।
महसा महसाऽऽमहसाचित ! चितमर्हत्कलाप ! तव पात् ॥ २ ॥
भारत्याभा रत्यापादित–दितपातकाऽऽतपायक्तृतः ।
जिनभर्तुर्जिनभर्तुर्माऽनोमाऽनोकवशाऽऽनद्धः ॥ ३ ॥
भविकं भवि कं भविकं नय नय नयनोरुरश्मिराजिष्णुः ।
रामा रामाराऽऽमा सिद्धा सिद्धायिके ! सके ! ऽशङ्के ॥ ४ ॥

( ११ )

( वसन्ततिलकावृत्तम् )

*श्रीवर्धमान ! जिनशासन ! सर्वदर्शि !,
सङ्घस्तुतोत्तमगुणैः श्रितसन्निकृष्ट ! ।
मातङ्गहारिगम ! शर्म कुरुष्व सम्यग् !,
श्रीसूरिहीरविजयोदित ! सत्प्रभाव ! ॥ १ ॥

---

१ पू मुनिराजश्रीरविसागरजीमहाराजकृतेयं स्तुतिः । *इयं स्तुतिः चतुर्थः उच्यते । २ प्रथमस्तुतौ हे श्रीवर्धमान ! शर्म कुरुष्व । द्वितीयां हे सर्वदर्शिसङ्घ ! शर्म कुरुष्व । तृतीयायां हे जिनशासन ! त्वं शर्म कुरुष्व । चतुर्थ्यां हे मातङ्गयक्ष ! त्वं शर्म कुरुष्व । ३ पू. कनककुशलगणिनां कृतेयं स्तुतिः ।

( १२ )

*कमलदललोचनं विमलकुलरोचनं,

भजत भयभञ्जनं भुवनजनरञ्जनम् ।

समयमभिवन्दितं त्रिजगतीजीवनं,

वीरमर्हद्गुणं शासनस्वामिनम् ॥ १ ॥

( १३ )

( अत्युक्ताजातौ स्त्रीछन्दः )

वीरं देवं नित्यं वन्दे ॥ १ ॥

जैनाः पादा युष्मान् पान्तु ॥ २ ॥

जैनं वाक्यं भूयाद्भूत्यै ॥ ३ ॥

शंन्नो देवी देयादम्बा ॥ ४ ॥

(सिद्धादेवी दद्यात्सौख्यं)

( १४ )

( कन्याछन्दः )

आदेवार्थं विश्वे वर्यम् । पूर्णानन्दं, भक्त्या वन्दे ॥१॥

तीर्थाधीशाः, शुद्धादेशाः । सर्वेऽभीष्टं, शं कुर्वन्तु ॥२॥

अर्हद्वाचो वाचो युक्त्या । क्लृप्ताः सद्भिः पापं घ्नतु ॥३॥

शान्ता कान्ता, सिद्धादेवी । शान्त्यै दान्त्यै, शश्वत् भूयात् ॥४॥

---

१ पू. आ श्रीविजयसेनसूरीश्वरजीमहाराजशिष्य पू. मुनिराजश्रीकमलविजयेन कृतेयं स्तुतिः । *इयं स्तुतिः चतुर्शः उच्यते । २ १७२४ प्रमिते वर्षे कृतवृत्तौ अस्मद्विहित एव पाठः लभ्यते तेनाऽत्रैवं उपन्यासः ।

( १५ )

( उपजातिवृत्तम् )

सदा महावीर ! भजे भवन्तम् ( ४ ) ॥ १ ॥
समे जिना मालमलङ्कवन्ते ( ४ ) ॥ २ ॥
संसारवारागममानधेहि ( ४ ) ॥ ३ ॥
रमाकरामे भवतादरेशा ( ४ ) ॥ ४ ॥

( १६ )

( अत्युक्ताजातौ स्त्रीछन्दः )

वीरं हीरं सेवे भक्त्या ॥ १ ॥
सर्वेऽर्हन्तः शान्तिं कुर्युः ॥ २ ॥
जैनं वाक्यं सिद्धिं दद्यात् ॥ ३ ॥
विद्यादेवी दद्याद्विद्याम् ॥ ४ ॥

( १७ )

( कन्याछन्दः )

लोकाधारं शान्ताकारं वन्दे वीरं वीरं वीरम् ॥ १ ॥
सिद्धा बुद्धा ये श्रीदेवाः तेषां भावैः कार्या सेवा ॥ २ ॥
श्रौतीभक्तिश्चित्ते येषां प्रज्ञाजातं पुण्यं तेषाम् ॥ ३ ॥
जैना यक्षा रक्षा दक्षा दिशन्तु मे धर्मे शिक्षाः ॥ ४ ॥

( १८ )

( अनुष्टुभ् )

*वीर ! देवव्रजाराध्य–यक्ष ! सिद्धान्ततत्त्ववित् ! ।
श्रीमद्विजयसेनाख्य !, कुरु भद्रं महोदयम् ॥ १ ॥

---

* इयं स्तुतिः चतुर्थ. उच्यते ।

( १९ )

( उपजातिवृत्तम् )

*श्रीवर्धमान ! प्रभुताऽभिराम ! श्रीतीर्थराजः शिवशुचिवाचः ।
सर्वानुभूतिप्रभवः प्रसर्पत्–सौख्यं प्रकर्षं ददतां जनानाम् ॥ १ ॥

( २० )

( वसन्ततिलकावृत्तम् )

*श्रीवर्द्धमान ! जय ! सर्वजिनेशसिद्ध–
सिद्धान्तगोमुखहिमद्युतिकान्तिकान्त– ।
सौवर्णवर्णवरदेहसमुल्लसच्छ्री–
लावण्यतोषितसुधीजनलोचनाली ॥ १ ॥

---

*इयं स्तुतिः चतुर्थः उच्यते ।

# तृतीय-स्तरङ्गः

## श्रीचतुर्मुखजिनस्तुतयः

( शिखरिणीवृत्तम् )

[1]जयश्रीनेतारं प्रथमजिनपं नोनुवति ये,
मुदा मामन्यन्ते त्रिदशवृषभैस्तेऽपि हरिवत् ।
प्रपेप्रीयन्ते ये वृषभजिननेत्रामृतरसैः,
प्रपेप्रीयन्ते ते युवतिभिरहो विष्णुपितृवत् ॥ १ ॥

[2]अश्वेतु प्रभुता शिरोवहनता मेऽबोभवीद्दक्षिणा—
वर्ताऽऽख्यापि वरीवरीति विभवाच्छङ्खोऽपि वो भक्तिताम् ।
यस्यां किं किल याचितुं तव पुरः शङ्खः श्रियः शाश्वतीः,
स श्रीनेमिजिनः प्रणम्रभुवनस्तारस्तुतः पातु नः ॥ २ ॥

मूर्तिं यायजनीश ! ते सुमनसां भक्त्यैव ये सच्छ्रिये,
नूनं यायजतीह राज्यविभवैर्देपालवत् तेऽङ्गिनः ।
ये वा जाजपनीद्ध ! मन्त्रमणिवत्ते यस्य नामान्यहो,
प्रापूर्याच्छिविनो गुणांश्च सकलान् श्रीपार्श्वनाथः स नः ॥ ३ ॥

१ पू. आ. श्रीमुनिसुन्दरसूरीश्वरजीमहाराजकृतेयं स्तुतिः सम्भाव्यते । २ शार्दूलविक्रीडितवृत्तम् ।

मूर्तिं मामदति स्म वीक्ष्य जिन! ते देवाधिदेव! प्रभा-
वत्याद्या इव ये पराप्रति हि तान् देवर्द्धयः सिद्धयः।
येनाऽजायि हरिर्बलादिह महावीरो वरीवर्त्यसौ,
यं सिंहाऽङ्कमिषान्नृसिंहमभजत् **श्रीवर्धमानः** श्रिये ॥ ४ ॥

प्रागैरावतभारतैकजनुषोऽसास्नाविषुर्वासवैः,
स्वर्णाद्रौ त्वपरीपरुस्त्रिजगतीर्दानैः स्वसांवत्सरैः।
लब्ध्वा ज्ञानमजङ्गमुः शिवपुरीं येऽनन्तसौख्यं मुनीन्,
श्रीसङ्घानभिपप्रपुः स्वविभवैः पुण्योद्भवैस्ते **जिनाः** ॥ ५ ॥

या मध्ये-सदसं जिनैस्त्रिपदिकादीपी स्म राराज्यते,
भास्यन्ते स्म ततोऽपि पूर्वसमया दीपा गणीन्द्रैः परैः।
देदीपीति ततोऽपि भासितजगत्सिद्धान्तदीपोऽर्कवत्,
विश्वान्धीकरणं तमोऽप्यपहरद् भूयात् स सङ्घश्रिये ॥ ६ ॥

सङ्घो यः परिपर्ति यां प्रमहितुं सम्यक्त्ववैशारदां,
ध्यातुं वा दरिदर्ति हृत्सरसिजे श्रीतीर्थकृच्छारदाम्।
रक्षायै परिपर्त्यसौ जिनमतं तं क्षीणकष्टारकं,
विश्वेष्टैः परिपर्तु सा **भगवती** श्रीसङ्घभट्टारकम् ॥ ७ ॥

## श्रीपश्चजिनस्तुतयः

(स्रग्धराछन्दः)

ख्याताख्याऽतामस! त्वामहतमहततिं सन्नुवामो नु वामो-
पायाऽपायापहारे **वृषभ**! वृषभराड्लाञ्छिताऽरं छितारम्।

१ प्रान्तपद्यत्रयेण साकं भण्यते तदा चतुर्मुखजिनस्तुतयो भवन्ति।

सारं सारङ्गदृष्टे ! ऽपदरपदरतं कम्प्रकामं प्रकामं,
हेतुं हेतुप्रदानेऽसुरतसुरतरो ! भूतले भूतलेखम् ॥ १ ॥
शान्ते ! शान्तेद्धनेत्रोभय ! सभयसखं देहतारं हतारं,
नन्ताऽनन्ताऽत्र न त्वामरणमरण ! तं सत्कलौकः ! कलौ कः ? ।
लीलाऽऽलीलाः सुदारा विषयविषयमुद्धासदक्षाः सदक्षाः,
येनाऽयेनाऽऽश्रितोच्चैरमलरमलभूदीप्रमुक्ताः प्रमुक्ताः ॥ २ ॥
शस्तेशस्तेजइद्धाहरितहरिततनुःशङ्खलक्ष्मा खलक्ष्मा—
दाता दाताघ ! लोकोत्तर ! वितर विभो ! ज्ञानबन्धोनबन्धो ! ।
सातं सातङ्कपुंसामनुपम ! नु पदं चारुधामोरुधामोऽ-
मा-रामा-राग ! नेमे ! समरसमरजःपानवायुर्नवायुः ॥ ३ ॥
पार्श्वः पार्श्वश्रितो वो हितमहितमभाग् रातु पातात् तु पाताऽ-
वामो वामोरुकुक्षौ सरसि स रसिको हंसकल्पः सकल्पः ।
लेखा लेखाधिपानामसितमसितताभं सदायं सदा यं,
रन्तारं तारमुक्तावरतवरतनुं सन्नताऽऽसन्नतासम् ॥ ४ ॥
यामायामादरोद्यद्विभव ! विभव ! सच्छोभदन्तं भदन्तं,
रोषारोषार्क ! वीराऽऽनतजनत ! जवात् त्वामहेयं महेयम् ।
तं तातं तारमुक्ताऽदभ ! गदभगरजःस्फीतवायो तवायो—
दाराऽदाराऽस्ति यस्येह रणहरणगीरीतिवारातिवारा ॥ ५ ॥
भोगाभोगासनाऽऽरादमलदमलया साधु नाना धुनानाऽ-
मानं मानं जिनालीह रतहरतरा मारमायारमायाः ।

१ प्रान्तपद्यत्रयेण साकं भण्यते तदा पञ्चजिनस्तुतयो भवन्ति ।

दंद्याद्यानतानामदरमदरजाः साऽविनाऽशं विनाशं,
याऽपायापासनं प्रातनुत तनुतमः सज्जनानां जनानाम् ॥ ६ ॥

सज्ज सज्जन्तुरक्षे लयनिलयनिभं भूरिभङ्गारिभङ्गा–
त्त्रामत्रामर्त्यऋद्धेरसमरसमयं संवरार्थं वरार्थम् ।
शंकोशं को रसित्वामरममरमहीराजपेयं जपेयं,
मारामारामवह्ने ! समय ! समयतिध्यात ! रोहत्तरोह ! ॥७॥

रक्षोरक्षोद्यता मेऽमलयमलयवत्सायतीनां यतीनां,
कल्याऽकल्याणराशि हरतु हरतुषारांशुभासा शुभा सा ।
मह्या मह्या श्रुताङ्गीह सितहसितरुगूहारिहाराऽरिहारा,
सोमा सोमाननाऽऽराद् वमदवमहाम्भोधराभा धराभा ॥ ८ ॥

## श्रीचतुर्विंशतिजिनस्तुतिः

### ( शार्दूलविक्रीडितवृत्तम् )

नाभेयाऽजितवासुपूज्यसुविधिश्रेयांसपद्मप्रभान्,
श्रीशान्ति शशिशम्भवाऽरसुमतिन्नेमिं नमिं शीतलम् ।
धर्मपार्श्वसुपार्श्ववीरविमलाऽनन्तं तथा सुव्रतं,
कुन्थुं मल्ल्यभिनन्दनौ नुत जिनानेतांश्चतुर्विंशतिम् ॥ १ ॥

जम्बूद्वीपविदेहपुष्करवरद्वीपार्धसन्धातकी–
खण्डेषे प्रवरेषु ये च भरतेष्वैरावतेषु स्थिताः ।
नम्राऽऽखण्डलमण्डलीमधुकरश्रेणीभिरासेविता,
तेषां तीर्थकृतां मुदे भवतु वः पादाऽरविन्दद्वयी ॥ २ ॥

उत्पादादिपदत्रयी समभवन्मूलं बभूवुर्दला-
न्याचारप्रमुखाऽङ्गकानि विपुलाः शाखाप्रशाखा नयाः ।
ज्ञानानि प्रसुनोदयः फलमभूत्स्वर्गादि-सम्पत्तयो,
यस्याऽसौ जयताज्जिनाऽऽगममहावृक्षश्चिरं भूतले ॥ ३ ॥

गौरी सैरिभगामिनी पविधरा वज्राङ्कुशी शृङ्खला-
च्छुत्ता चक्रधरा फणीन्द्र-महिषी सर्वायुधा रोहिणी ।
प्रज्ञप्ति र्मृगगामिनी द्रुमकरा काली महाकालिका,
मानस्या सह षोडशाऽपि कुशलान्येताः प्रयच्छन्तु नः ॥ ४ ॥

## श्रीसामान्यजिनस्तुतयः

( उद्दामदण्डच्छन्दः )

रुचिररुचिरमहामणिस्वर्णदुर्वर्णनिर्वृत्तिपावित्र्यभृच्चित्रशालत्रयी-
मध्यमध्यासितं भाभिरुद्भासितं निर्जरोपासितं,
समदमदनतुङ्गमातङ्गनिर्भङ्गसारङ्गनाथं सनाथं सहोभिर्महो-
भिर्महामोहसन्दाहविध्वं—सदक्षं सदक्षं सदा ।
विघटितघनशोकबिम्बोकमल्लोकमस्तोकदुष्पापसन्तापनिर्वा-
पपाथोदमक्षोदमामोदविस्तारकं कारकं सम्पदां,
मिलितललितसिद्धगन्धर्वविद्याधरश्रेणिसङ्गीतविस्फीतसौर-
भ्यविभ्राजिकीर्तिप्रदानं सदाऽऽनन्दमर्चामि तीर्थेश्वरम् ॥ १ ॥

प्रचलदमलकुण्डलभ्राजिगल्लस्थप्रहसाखण्डलस्वर्गिसेव्योल्ल-
लत्तारभामण्डलज्योतिरुद्द्योतिताखण्डदिग्मण्डलः,

समरमरकविघ्नसङ्घातनिर्घातनिष्णात ! विध्यातविस्तारिसंसारदुर्वारदावानलः पावितक्ष्मातलः क्षीणमायामलः ।

प्रकटविकटदर्पकन्दर्पविद्वेषिनिष्पेषिनिध्यानसद्ध्यानवाणीकृपाणीसमुच्छिन्नसंशीतिदुर्नीतिवल्लीवितान ! प्रभो !,

जिनविसर ! मम क्षतानल्पदुष्कल्पसङ्कल्पकल्पद्रुकल्पः प्रकुष्णातु दोषं प्रमुष्णातु रोषं प्रतुष्णातु योषं भवान् ।। २ ।।

कुमतकुमुदखण्डसच्चण्डमार्तण्डमुद्दण्डसद्भङ्गकल्लोलमालासमुद्रं समुद्रं सुमुद्रम्ययोगीन्द्रदेवेन्द्रवृन्दस्तुतं,

यदि हि बत जगज्जनावर्यवैधुर्यविध्वंसिबोधोद्धुरं सौवमाधुर्यमाधुर्यदम्लानविज्ञानसन्तानभाजो गणाधीश्वराः ।

विलसदसमवृद्धिदुर्बुद्धिवल्लीसमुच्छेदभल्ली समानं समानं गुणश्रीनिधानं शमश्रीनिदानं शिवस्वर्गयानं भुवा,

सुरगिरिशिरोविस्फुरच्चारुचूलं सुपर्वानुकूलं सुवर्णाभिरामं नमस्यामि कामं तदुर्व्या ललामं पवित्रासनं शासनम् ।। ३ ।।

सरसरभसचारूवन्दारूवृन्दारकोदारस्फुरन्मौलिमौलिस्पृगप्रत्नरत्नप्रभाभारसारक्रमाधूतभूतभ्रमा,

स्फटिकतुहिनचन्द्रनिस्तन्द्रचन्द्रचन्द्रप्रभाजिष्णुवर्धिष्णुरोचिष्णुरोचिः प्रपञ्चस्तुताशावकाशाभृताशा नमस्यन्नृणाम् ।

अपमलकलहंसमध्यासिता नासिता राजिताराजिता सम्पदा शर्मदा मन्दरमन्दारमालाभिरभ्यर्चिता चर्चिता चन्दनै—

विकसितशतपत्रपत्राभनेत्रा पवित्रा विचित्रा ममाद्यत्वविद्या
विभिद्यादवद्यानि सद्यः प्रसद्यादलं भारती भारती ॥ ४ ॥

(२)

( तोटकच्छन्दः )

सहसा महसा सहसा महसा, महता परमं महताऽपरमम् ।
शमितस्वमृतं, शमितस्वमृतं, गवि तीर्थकरं गवि तीर्थकरम् ॥ १ ॥

रुचिरा रुचिरा रुचिराजिघना, जनका जनका जनकामभिदः ।
महिताऽऽमहिता महिता दधता—मतमाऽऽमतमा मतमाम-रुहाः॥२॥

शमरं शमरं दधतं दधतं, समयं समयं सदयं सदयम् ।
सुपदं सुपदं नुत तं नु ततं, बहुधा बहुधामहितं महितम् ॥३॥

विभया सितया विभयाऽऽसितया, कलिता परदा कलितापरदा ।
वरदाऽऽनकरा वरदानकरा, सतिगौरवमा सति गौरव मां ॥४॥

(३)

( आर्या )

गब्भावयारजम्मण—निक्खमणे केवले अ निव्वाणे ।
सुरनाहरइअपूअं, तं वंदे जिणवरं सिरसा ॥ १ ॥

करुणाए सरणहिअं, उद्धरिअं जेहिं तिहुअणं सयलं ।
भवजलहिंमि पडंतं, अरिहंताणं नमो तेसिं ॥ २ ॥

---

१ पूजय । २ कामरहितमित्यर्थः । ३ मोक्षम् । ४ सत्त्वस्य सुखकरम् । ५ स्वर्गे । ६ लोभ° । ७ सदाचारे । ८ माम् ।

मोहकरिकुंभदलणो, नयभंगपमाणकेसरकलावो ।
तासीयकुमयकुरंगो, सिद्धंतहरि चिरं जयउ ॥ ३ ॥
पउममुही पउमकरा, पउमासणसंठिआ पउमनित्ता ।
वरपउमगब्जगोरा, सुअदेवी देउ सुहनाणं ॥ ४ ॥

(४)

(अनुष्टुभ्)

गर्भे जन्मनि दीक्षायां, केवले निवृतौ तथा ।
यस्य इन्द्रा महश्चक्रुस्तं जिनं नौमि भक्तितः ॥ १ ॥
मोहेभ्यकुम्भनिर्भेद–विधौ कण्ठीरवोपमाः ।
ये जिनास्तत्पदमम्भोजं, नमस्याम्यघनाशनम् ॥ २ ॥
अङ्गोपाङ्गजलाऽऽपूर्णं, नयकल्लोलसङ्कुलम् ।
सद्दर्शनादिरत्नाढ्यं, वन्दे जैनाऽऽगमोदधिम् ॥ ३ ॥
सर्वे यक्षाम्बिकाद्या ये, वैयावृत्त्यकराः जिने ।
क्षुद्रोपद्रवसङ्घातं, ते द्रुतं द्रावयन्तु नः ॥ ४ ॥

(५)

अविरलकुवले[1]–गवल[2]–मुक्ताफल–कुवलय–कनकभासुरं,
परिमलबहुलकमलदलकोमलपदतललुलितनरसुरम् ।
त्रिभुवनभवनदीप्रदीपकमणिकलिकाविमलकेवलं,
नवनवयुगलजलधिपरिमितजिनवरनिकरं नमाम्यलम् ॥ १ ॥

---

१ बदरीफलम् । २ महिषशृङ्गम् ।

जे तित्थंकरपायपंकजवणासेविक्करोलंबया,
भव्वाणं जिनभत्तयाण अणिसं सोहिज्ज कज्जेरया ।
सम्मद्दिट्ठिसुरावराभरणभा दिप्पन्त देहप्पहा,
ते संघस्स हवन्तु विग्घहरणा कल्लाणसंपायणा ॥ ४ ॥

(२)

( भुजङ्गप्रयातवृत्तम )

महीमंडणं पुन्नसोवन्नदेहं, जणाणंदणं केवलनाणगेहं ।
महानंदलच्छीबहुबुद्धिरायं, सुसेवामि सीमंधरं तित्थरायं ॥ १ ॥
पुरा तारगा जेह जीवाण जाया, भवस्संति ते सव्वभव्वाण ताया ।
तहा संपयं जे जिणा वट्टमाणा, सुहं दिंतु ते मेति लोयप्पहाणा ॥२॥
दुरुत्तारसंसारकूवारपोयं, कलंकावलीपंकपक्खालतोयं ।
मणोवंछियत्थे सुमंदारकप्पं, जिणिंदागमं वंदिमो सुमहप्पं ॥३॥
विक्कोसे जिणिंदाणणंभोजलीणा, कलारूवलावन्नसोहग्गपीणा ।
वहंतस्स चित्तंमि णिच्चंपि झाणं, सिरीभारई देहि मे सुद्धनाणं ॥४॥

(३)

( भुजङ्गप्रयातवृत्तम् )

महाकेवलन्नाणकल्लाणवासो, सलावण्णसोवन्नवन्नप्पयासो ।
थुणे सारसिद्धि पुरि सत्थवाहं, सया सामिसीमंधरं तित्थनाहं ॥१॥
सुरा किन्नरा जास पायारविंदे, नमंसंति भूयालसेविज्ज वंदे ।
तिलोई जणाणंदसंपुण्णचंदा, सुहं दिंतु मे सव्वया ते जिणिंदा ॥२॥

सया पावसंतीयपीयूषपूरं, तमोरासिनिन्नासउल्लाससूरं ।
गुणापारसंसारकूवारसेउं, जिणिंदागमं वंदिमो सुक्खहेउं ॥ ३ ॥
जगन्नाहसीमंधरं पायभत्ता, पवित्ताणरत्ता सुसत्ताण जत्ता !
सुहं सव्व–भव्वाण संपूरिता सा, सया सेय पत्तिगिरा देविआ सा ॥४॥

(४)

*सीमन्धरभूधरबन्धुरसिन्धुरचारी,
सर्वज्ञसुधाकरप्रकरप्रभुताधारी ।
सभयामयवारणनिष्कारणमुपकारी,
जय शासन ! सुस्वरकमलविजय ! जयकारी ॥ १ ॥

(१)

## श्रीसप्तत्यधिकशतजिनानां स्तुतिः

(शार्दूलविक्रीडितवृत्तम्)

ये वन्धूकतमालकुन्दकलिका हेमप्रियङ्गुप्रभा–
श्चञ्चच्चन्द्रमरीचिनिर्मलगुणव्याप्तत्रिलोकोदराः ।
ये पश्यन्ति करस्थितामलकवल्लोकत्रयं सर्वदा,
ते सप्तत्यधिकं शतं जिनवृषा मुष्णन्तु पापानि वः ॥ १ ॥
रक्ताऽशोकतरुर्विचित्रसुमनो–वृष्टिः सुदिव्यध्वनिः,
शुभ्रे भास्वरचामरे मणिमयं व्याभाति सिंहासनम् ।

---

* इय स्तुतिः चतुर्थी उच्यते । १. पू.आ.श्रीविजय-सेनसूरीश्वरजीमहाराजशिष्यकमलविजयेन कृतेयं स्तुतिः ।

व्यन्तरनगर–रुचक–वैमानिक–कुलगिरि–कुण्ड–कुण्डले,
तारक–मेरु–जलधि–नन्दीश्वरगिरि–गजदन्तमण्डले ।
वक्षस्कार–भवन–मनुजोत्तर–कुरु–वैताढ्य–कुञ्जगाः,
त्रिजगति जयति विदितशाश्वतजिनततिरिह मोहपारगा ॥ २ ॥

श्रतरत्नैकजलधिमधुमधुरिमरसभरगुरुसरोवरं,
परमततिमिरकिरणहरणोद्धरदिनकरकिरणसोदरम् ।
गमनयहेतुभङ्गगम्भीरिमगणधरदेवगीष्पदं,
जिनवरवचनमवनिमवतात् शुचि दिशतु नतेषु सम्पदम् ॥ ३ ॥

श्रीमद्वीरचरमतीर्थाऽधिपमुखकमलाऽधिवासिनी,
पार्वणचन्द्रविशदवदनोज्ज्वलराजमरालगामिनी ।
प्रदिशतु सकलदेवदेवीगणपरिकलिता सतामियं,
विचकिलधवलकुवलकलमूर्तिः श्रुतदेवी श्रुतोच्चयम् ॥ ४ ॥

( ६ )

*वासवस्तुतपदो महामहा, भक्तदत्तविलसन्महापदः ।
वागुपासितसमस्तमाजिनः, स्वामिनो विदधतो सुखश्रियम् ॥१॥

( ७ )

*वरकेवलदंसणनाणधरा, बहुपङ्ककलङ्ककुकम्महरा: ।
अरिहन्तशुभाऽऽगमदेवगणाऽ–वगणन्तु अणन्तदुहं सगुणा: ॥१॥

---

१ वृक्षवेष्टितस्थानानि । २ मल्लिकापुष्पम् । * इयं स्तुतिः चतुर्थाः उच्यते ।

( ८ )

( उपजातिवृत्तम् )

*श्रीतीर्थराजः पदपद्मसेवा–हेवाकिदेवासुरकिन्नरेशः ।
गम्भीरगीस्तारतरावरेण्य–प्रभावदाता ददतां शिवं वः ॥ १ ॥

## ( १ ) श्रीसीमन्धरजिनस्तुतयः

( शार्दूलविक्रीडितवृत्तम )

वन्दे पुव्वविदेहभूमिमहिलालंकारहारोपमं,
देवं भत्तिपुरस्सरं जिणवरं सीमंधरं सामियं ।
पाया जस्स जिणेसरस्स भवभीसंदेहसंतासणा,
पोयाभांभवसायरंमि निविडं ताणं जणाणं सया ॥ १ ॥

तीयाणागयवट्टमाणअरिहा सव्वेवि सुक्खावहा,
पाणीणं भवियाण संतु सययं तित्थंकरा ते चिरं ।
जेसिं मेरुगिरिंमि वासवगणा देवंगनासंगया,
भत्तीये पकुणंति जम्मणमहं सोवन्नकुंभाइहिं ॥ २ ॥

निस्सीमामलनाणझाणणघणो संमोहनिन्नासणो,
जो निस्सेसपयत्थसत्थकलणे आइच्चकप्पो फुडो ।
सिद्धंतं भविया सरंत हियडा तं बारसंगीगयं,
नाणाभेयणयावलिहिकलियं सव्वन्नुणा भासियं ॥ ३ ॥

---

* इयं स्तुतिः चतुर्शः उच्यते ।
१ पू. आ. श्री सोमतिलकसूरीश्वरजीमहाराज कृतेयं स्तुतिः ।

जे तित्थंकरपायपंकजवणासेविक्करोलंबया,
भव्वाणं जिनभत्तयाण अणिसं सोहिज्ज कज्जेरया ।
सम्मद्दिट्ठिसुरावराभरणभा दिप्पन्त देहप्पहा,
ते संघस्स हवन्तु विग्घहरणा कल्लाणसंपायणा ॥ ४ ॥

(२)

( भुजङ्गप्रयातवृत्तम् )

महीमंडणं पुन्नसोवन्नदेहं, जणाणंदणं केवलनाणगेहं ।
महानंदलच्छीबहुबुद्धिरायं, सुसेवामि सीमंधरं तित्थरायं ॥ १ ॥
पुरा तारगा जेह जीवाण जाया, भवस्संति ते सव्वभव्वाण ताया ।
तहा संपयं जे जिणा वट्टमाणा, सुहं दिंतु ते मेति लोयप्पहाणा ॥२॥
दुरुत्तारसंसारकूवारपोयं, कलंकावलीपंकपक्खालतोयं ।
मणोवंछियत्थे सुमंदारकप्पं, जिणिंदागमं वंदिमो सुमहप्पं ॥३॥
विकोसे जिणिंदाणणंभोजलीणा, कलारूवलावन्नसोहग्गपीणा ।
वहंतस्स चित्तंमि णिच्चंपि झाणं, सिरीभारई देहि मे सुद्धनाणं ॥४॥

(३)

( भुजङ्गप्रयातवृत्तम् )

महाकेवलन्नाणकल्लाणवासो, सलावण्णसोवन्नवन्नप्पयासो ।
थुणे सारसिद्धि पुरिं सत्थवाहं, सया सामिसीमंधरं तित्थनाहं ॥१॥
सुरा किन्नरा जास पायारविंदे, नमंसंति भूयालसेविज्ज वंदे ।
तिलोई जणाणंदसंपुण्णचंदा, सुहं दिंतु मे सव्वया ते जिणिंदा ॥२॥

सया पावसंतीयपीयूषपूरं, तमोरासिनिन्नासउल्लाससूरं ।
गुणापारसंसारकूवारसेउं, जिणिंदागमं वंदिमो सुक्खहेउं ॥ ३ ॥
जगन्नाहसीमंधरं पायभत्ता, पवित्ताणरत्ता सुसत्ताण जत्ता !
सुहं सव्व-भव्वाण संपूरिता सा, सया सेय पच्चिगिरा देविआ सा ॥४॥

(४)

*सीमन्धरभूधरबन्धुरसिन्धुरचारी,
सर्वज्ञसुधाकरप्रकरप्रभुताधारी ।
सभयामयवारणनिष्कारणमुपकारी,
जय शासन ! सुस्वरकमलविजय ! जयकारी ॥ १ ॥

(१)

## श्रीसप्तत्यधिकशतजिनानां स्तुतिः

( शार्दूलविक्रीडितवृत्तम् )

ये बन्धूकतमालकुन्दकलिका हेमप्रियङ्गुप्रभा-
श्चञ्चच्चन्द्रमरीचिनिर्मलगुणव्याप्तत्रिलोकोदराः ।
ये पश्यन्ति करस्थितामलकवल्लोकत्रयं सर्वदा,
ते सप्तत्यधिकं शतं जिनवृषा मुष्णन्तु पापानि वः ॥ १ ॥

रक्ताऽशोकतरुर्विचित्रसुमनो-वृष्टिः सुदिव्यध्वनिः,
शुभ्रे भास्वरचामरे मणिमयं व्याभाति सिंहासनम् ।

* इय स्तुतिः चतुर्थः उच्यते । १. पू.आ.श्रीविजय-सेनसूरीश्वरजीमहाराजशिष्यकमलविजयेन कृतेयं स्तुतिः ।

भाश्चक्रं स्वरदुंदुभिः स्फटिकरुक्छत्रत्रयं राजते,
येपा[न्ते विनयन्तु] वोऽनघगुणाः पाप्मानमाराज्जिनाः ॥ २ ॥

यानं मोक्षपुरीप्रयाणकविधौ सेतुर्भवाम्भोनिधे–
र्बीजं बोधिलतोद्गमे च दिनकृद् द्वेषान्धकारे क्षितौ।
लक्ष्मीवेश्म कुवादिकुञ्जरघटाकण्ठीरवो वोऽनिशं,
सिद्धान्तः सुखहेतुरस्तु जगतामानन्दपात्रं परम् ॥ ३ ॥

मुक्ताशङ्खपयोदधीन्दुधवला वाग्देवता बालिका,
[अज्ञानान्धतमो विनोदनचणा धीवैभवोत्पादिका]।
देव्यः शासनसन्निधाननिरता विद्याधिपाः षोडश,
व्यापत्तिं प्रबिदारयन्तु जगतां नः प्रत्यनीकैः सदा ॥ ४ ॥



# चतुर्थस्तरङ्गः

## श्रीपञ्चतीर्थस्तुतिः

( शार्दूलविक्रीडितवृत्तम् )

श्रीशत्रुञ्जयमुख्यतीर्थतिलकं श्रीनाभिराजाऽङ्गजं,
वन्दे रैवतशैलमौलिमुकुटं श्रीनेमिनाथं यथा ।
तारङ्गेऽप्यजितं जिनं भृगुपुरे श्रीसुव्रतं स्तम्भने,
श्रीपार्श्वं प्रणमामि सत्यनगरे श्रीवर्धमानं त्रिधा ॥ १ ॥

वन्देऽनुत्तरकल्पतल्पभुवने ग्रैवेयके व्यन्तरा–
ज्योतिष्कामरमन्दराद्रिवसतीस्तीर्थङ्करानादरात् ।
जम्बू पुष्करधातकिषु रुचके नन्दीश्वरे कुण्डले,
ये चाऽन्येऽपि जिना नमामि सततं तान् कृत्रिमा–कृत्रिमान् ॥ २ ॥

श्रीमद्वीरजिनस्य पद्मह्रदतो निर्गम्य तं गौतमं,
गङ्गावर्तनमेत्य या प्रविभिदे मिथ्यात्ववैताढ्यकम् ।
उत्पत्तिस्थितिसंहृतित्रिपथगा ज्ञानाम्बुदा वृद्धिगा,
सा मे कर्ममलं हरत्वविकलं श्रीद्वादशाङ्गी नदी ॥ ३ ॥

शक्रश्चन्द्ररविग्रहाश्च धरणब्रह्मेन्द्रशान्त्यम्बिका,
दिक्पालाः सकपर्दिगोमुखगणश्चक्रेश्वरी भारती ।

येऽन्ये ज्ञानतपःक्रियाव्रतविधिश्रीतीर्थयात्रादिषु,
श्रीसङ्घे च तुरा श्चतुर्विधसुरास्ते सन्तु भद्रङ्कराः ॥ ४ ॥

## श्रीनन्दीश्वरद्वीपस्तुस्तिः

(१)

(स्रग्धराछन्दः)

दीवे नंदीसरम्मि चउदिशि चउरो अंजणाभा नगिंदा,
तेहिंतो वाविमज्झे दहिमुहगिरिणो सेयवण्णा तहेव ।
दुण्हं दोण्हंपि तेसि रुइर रइकला अंतराले य दो दो,
बावण्णा तत्थ तित्थे सुरवरभवणा तेसु वंदे जिणिंदे ॥ १ ॥

मेरूणं पंचगम्मि कुरुतरुसु तहा नागदंते सुयारे,
वेयड्ढेसु च नंदी सरवरि च नगे सासया सुप्पसिद्धा ।
वक्खारेसुं नगेसुं कुलगिरि उवरि कुंडले माणुसाणं,
सेले सामाकरे जे जिणभवणठिया ते जिणेसा जयंतु ॥ २ ॥

जे तीयाणागयम्मि भवजलहितरी–सन्निहं वट्टमाणे,
काले तित्थंकरेहिं अमियरससमं भासियं अत्थओ तं ।
भव्वाणं मुक्खहेउं गणहररइयं सुत्तउ बारसंगं,
सुत्तं अनाणधंतं हरउ मह सया सासयं सव्वलोए ॥ ३ ॥

सोहम्मिदाइणो जे तियसगणजुआ पंचहा जोइसीया,
बत्तीसं वितरिंदा सुरभवणठिया देवदेवीहि जुत्ता ।
पायालिंदाई वीसं चमरपभिइणो धम्मकज्जुज्जयस्स,
सव्वे संघस्स विग्घं मणसि सुमरिया सुपसन्ना हरंतु ॥ ४ ॥

( उपजाति )

*नन्दीश्वरद्वीपमहीपरत्नाऽलङ्कारसारा जिनचैत्यवारा ।
प्रमोदचेतः सुहृदेति नूताः, कुर्युः प्रसादं निजदर्शनेन ॥ १ ॥

## ( १ ) श्रीअष्टापदतीर्थस्तुतिः

*वासवस्तुतपदे महामहा, भक्तदत्तविलसन्महापदः ।
वागपोहिततमस्त माजिन, स्वामिनो विदधतां सुखश्रियम् ॥ १ ॥

## ( १ ) श्रीपञ्चकल्याणकस्तुतिः

( स्रग्धराछन्दः )

नाभेयं सम्भवं तं अजियसुविहियं नंदणं सुव्वयं वा,
सुप्पासं पउम्मनाहं सुमइससिपहं सीयलं वासुपूज्जं ।
सेयंसं धम्मसंति विमलअरजिणं मल्लिकुंथुं अणंत,
नेमि पासं च वीरं नमि च विनमिमो पञ्चकल्लाणएसुं ॥ १ ॥
गब्भाहाणेसु जम्मे वयगहणखणे केवलालोयकाले,
पच्छा निव्वाणठाणे पगमणसमये संथुया भावसारं ।
देवेहिं दाणवेहिं भवणवणसमं किन्नरेहिं नरेहि,
ते मज्झं दिंतु मुक्खं सयलजिणवरा पञ्चकल्लाणएसुं ॥ २ ॥
हेउं तित्थंकराणं जमिह अणुवमं भावतित्थंकरत्ते,
सव्वन्नूणं च पासा अहमवि नियमा जायए सव्वकालं ।
अन्नुन्नुप्पत्तिहेउं नयगमगहणं बीयअंकूररूवं,
अव्वाबाहं जिणाणं जयउ पवयणं पञ्चकल्लाणएसुं ॥ ३ ॥

---

* इयं स्तुतिः चतुर्शः उच्यते ।

गोरी–गंधारी-काली-नरवर-महिसी-हंससग्गो-रहत्था,
सव्वत्था–माणवी वा वरकमलकरा-रोहिणी संति अम्बा ।
पण्णत्तिच्छुत्ति-पोम्मा-धणुससरसया-खित्तगेहाइवासा,
संतिं संघे कुणंतु गहगणसहिया पञ्चकल्लाणएसुं ॥ ४ ॥

( २ )

(उपजातिवृत्तम्)

गर्भाऽवतारे जनिषु व्रते च, श्रीकेवले सिद्धिसमागमे च ।
कल्याणके स्वर्गसमानभूमि–स्तं तीर्थपं ! भावभरेण नौमि ॥१॥
नामाऽर्हतः श्रीऋषभेशमुख्यान्, द्रव्यार्हतो भूतभविष्यदीशान् ।
सीमन्धराद्यानपि भावदेवान्, श्रीस्थापनाऽर्हत्प्रतिमाः श्रयेयम् ॥२॥
उत्कालिकं कालिकमङ्गरूपं, श्रीदृष्टिवादाऽऽख्यमुरुस्वरूपम् ।
इत्थं श्रुतज्ञानमनेकभेदं, ध्यायामि नित्यं भवभीतिभेदम् ॥३॥
प्रचण्डपञ्चाननचारुयाना, पदे पदे कल्पलता प्रधाना ।
श्रीअम्बिका मन्दिरमेखलेव, प्रीणातु नेत्रे मम मन्दकानाम् ॥४॥

## १ श्रीउद्योतपञ्चमीस्तुतयः

(स्रग्धराछन्दः)

श्रीनेमिः पञ्चरूपस्त्रिदशपतिकृतप्राज्यजन्माभिषेकं–
श्चञ्चत्पञ्चाऽक्षमत्तद्विरदमदभिदापञ्चवक्त्रोपमानः ।
निर्मुक्तः पञ्चदेहाः परमसुखमयः प्रास्तकर्मप्रपञ्चः,
कल्याणं पञ्चमीसत्तपसि वितनुतां पञ्चमज्ञानवान् वः ॥१॥

१ महामानसी ।

सम्प्रीणन् सच्चकोरान् शिवतिलकसमः कौशिकाऽऽनन्दिमूर्तिः,
पुण्याब्धिप्रीतिदायी सितरुचिरिव यः स्वीयगोभिस्तमांसि ।
सान्द्राणि ध्वंसमानः सकलकुवलयोल्लासमुच्चैश्चकार,
ज्ञानं पुण्याज्जिनौघः स तपसि भविनां पञ्चमीवासरस्य ॥२॥
पीत्वा नानाभिधाऽर्थामृतरसमऽसमं यान्ति यास्यन्ति जग्मु-
र्जीवा यस्मादनेके विधिवदमरतां प्राज्यैर्निर्वाणपुर्याम् ।
यात्वा[3] देवाधिदेवाऽऽगमदशमसुधाकुण्डमाऽऽनन्दहेतु-[4]
स्तत्पञ्चम्यास्तपस्युद्यतविशदधियां भाविनामस्तु नित्यम् ॥ ३ ॥
स्वर्णाऽलङ्कारवल्गन्मणिकिरणगणध्वस्तनित्याऽन्धकारा,
हुङ्काराऽऽरावदूरीकृतसुकृतिजनव्रातविघ्नप्रचारा ।
देवी श्रीअम्बिकाऽऽख्या जिनवरचरणाऽम्भोजभृङ्गी समाना,
पञ्चम्यह्नस्तपोर्थं वितरतु कुशलं धीमतां[5] साऽवधाना ॥ ४ ॥

( २ )

( स्रग्धराछन्दः )

शैवेयः शङ्खकेतुः कलितजनमनस्संशयः सर्वकालं,
विश्वेशः सौवदेहद्युतिविजितघनः कर्मघर्माऽमृतांशुः ।
क्षान्त्याढ्यः कष्टदुष्टक्षयकरणपरो रैवतोत्तंसतुल्यः,
कल्याणं पञ्चमी सत्तपसि वितनुता पञ्चमज्ञानवान् वः ॥१॥

---

१ तपो विषये सति ॥ २ निर्वाण-शर्म ॥ ३ गत्वा ॥ ४ पाताले नवाऽमृतकुण्डानि सन्ति । नागे कुलैरधिष्ठितानि इति श्रुतिः । इदं तु भगवदागमरूपं दशमामृतकुण्डमित्यर्थः ॥ ५ भक्तिमतां प्राणिनाम् ॥ ६ पूज्य मुनिराजश्री गुणविजयेन कृतेयं स्तुतिः ॥

नाभेयत्रैशलेयप्रथमचरमकश्चन्द्रवच्चारुचञ्चन्-
मूर्तिः स्फूर्तिं दधानः प्रथयति कुमुदं यो बुधाह्लादहेतुः ।
प्रोद्दामच्छद्मपद्मा विकचकरकरः सत्कलावान्मनोज्ञो,
ज्ञानं पुष्याज्जिनौघः स तपसि भविनां पञ्चमीवासरस्य ॥२॥

गीर्वाणाधीशपुंसां पतिकुसुमभिदं पुण्यभाजो मनुष्या-
निर्वाणामेयसौख्यप्रबलफलमथो यत्प्रसादाल्लभन्ते ।
श्रीसार्वप्रौढशुद्धागमधरणिरुहः सिद्धिदानैकरक्त-
स्तत्पञ्चम्यास्तपस्युद्यतविशदधियां भाविनामस्तु नित्यम् ॥ ३ ॥

संपूर्णा पूर्णिमेन्दुप्रभसुभगगुणैर्दत्तदेवेन्द्रमाना-
प्रौद्यद्गन्धद्विपेन्द्रप्रचुरमदहरैणाधिपे राजमाना ।
श्रीअर्हद्भक्तिभावा विमलकजकरा भास्वदम्बाभिधाना,
पञ्चम्यह्नस्तपोऽर्थं वितरतु कुशलं धीमतां सावधाना ॥ ४ ॥

( ३ )

( शार्दूलविक्रीडितवृत्तम् )

पञ्चानन्तकसुप्रपञ्चपरमानन्दप्रदानक्षमं,
पञ्चानुत्तरसीमदिव्यपदवीवश्याय मन्त्रोपमम् ।
येन प्रोज्ज्वलपञ्चमीवरतपो व्याहारि तत्कारिणां,
श्रीपञ्चाननलाञ्छनः स तनुतां श्रीवर्धमानः श्रियम् ॥ १ ॥

ये पञ्चाश्रवरोधसाधनपरा पञ्चप्रमादाहराः,
पञ्चाणुव्रतपञ्चसुव्रतविधिप्रज्ञापनासादराः ।

कृत्वा पञ्चहृषीकनिर्जयमथ प्राप्ता गतिं पञ्चमीं,
तेऽमी सन्तु सुपञ्चमीव्रतभृतां तीर्थङ्कराः शङ्कराः ॥ २ ॥

पञ्चाचारधुरीणपञ्चमगणाधीशेन संसूत्रितं,
पञ्चाज्ञानविचारसारकलितं पञ्चेपु—पञ्चत्वदम् ।
दीपाभं गुरुपञ्चमारतिमिरेष्वेकादशीरोहिणि—
पञ्चम्यादिफलप्रकाशनपटुं ध्यायामि जैनागमम् ॥ ३ ॥

पञ्चानां परमेष्ठिनां स्थिरतया श्रीपञ्चमेरुश्रिया,
भक्तानां भविनां गृहेषु बहुशो या पञ्चदिव्यं व्यधात् ।
प्रह्वे पञ्चजने मनोमतकृतौ स्वारत्नपाञ्चालिका,
पञ्चम्यादितपोवता भवतु सा सिद्धायिका त्रायिका ॥ ४ ॥

(४)

(उपजातिवृत्तम्)

समुद्रभूपालकुलप्रदीपः, संसारवार्द्धौ विपुलान्तरीपः ।
श्रीपञ्चमीपुण्यतपोनिलीनं, शिवाङ्गजोऽव्याज्जनमात्मलीनम् ॥१॥

वितेनिरे मेरुगिरौ वितन्द्रा, येषां मुदा जन्ममहं महेन्द्राः ।
रक्षन्तु ते पञ्चमिकातपस्थं, विघ्नौघभित्तीर्थकृतो भवस्थम् ॥२॥

चकार यं पञ्चमगच्छनेता, यः पापभारस्य सदाऽपनेता ।
स आगमः पञ्चमिकातपस्थं, करोतु पूर्णं त्रिजगन्नमस्यम् ॥३॥

प्रयाति या नेमिगिरौ विनीता, सिंहेऽधिरूढाऽस्तुतमो—निहन्त्री ।
श्रीपञ्चमीचारुतपो ममाऽम्बा, पुष्णातु देवी जगतः किलाम्बा ॥४॥

# श्रीमौनएकादशीस्तुतिः

( स्रग्धराछन्दः )

श्रीभाग् नेमिर्बभाषे जलशयसंविधे स्फूर्तिमेकादशीयां,
माद्यन्मोहावनिद्रप्रशमनविशिखः पञ्चबाणाऽर्चिरर्णः ।
मिथ्यात्वध्वान्तवान्तौ रविकरनिकरस्तीव्रलोभाद्रिवज्रं,
श्रेयस्तत्पर्व वः स्ताच्छिवसुखमिति वा सुव्रतश्रेष्ठिनोऽभूत् ॥१॥

इन्द्रैरभ्रभ्रमद्भिर्मुनिपगुणरसाऽऽस्वादनाऽऽनन्दपूर्णै-
र्दीव्यद्भिः स्फारहारैर्ललितवरवपुर्यष्टिभिः स्वर्वधूभिः ।
सार्धं कल्याणकौघो जिनपतिनवतेर्बिन्दुभूतेन्दुसङ्ख्यो,
घस्ले यस्मिन् जगे तद्भवतु सुभविनां पर्व सच्छर्महेतुः ॥२॥

सिद्धान्ताब्धिप्रवाहः कुमतजनपदान् प्लावयन् यः प्रवृत्तः,
सिद्धिद्वीपं नयन् धीधनमुनिवणिजः सत्यपात्रप्रतिष्ठान् ।
एकादश्यादिपर्वेन्दुमणिमतिदिशन् वीवराणा महार्घ्यं,
सन्न्यायाम्भश्च नित्यं प्रवितरतु स नः स्वप्रतीरे निवासम् ॥३॥

तत्पर्वोद्यापनार्थं समुदितसुधिया शम्भुसङ्ख्या-प्रमेया-
मुत्कृष्टां वस्तुवीथिमभयदसदने प्राभृतीकुर्वतां ताम् ।
तेषां सत्याऽक्षपादैः प्रलपितमतिभिः प्रेतभूतादिभिर्वा,
दुष्टैर्जन्यं त्वजन्यं हरतु हरितनुन्यस्तपादाऽम्बिकाऽऽख्या ॥ ४ ॥

---

१ कृष्णसमीपे ॥ २ अर्णः-जलम् ॥ ३ वा शब्दस्य यथा इत्यर्थः ॥
४ गीयते स्म ॥ ५ निजपार्श्वे ॥ ६ अजन्यं-उपद्रवम् ॥

( १ )

## श्रीसिद्धचक्रस्तुतयः ।

(स्रग्धराछन्दः)

अर्हन् मूलं प्रकाण्डोऽतनुनिकरधरः सूरिराजश्चशाखा,
गुल्मः सद्वाचकेशो दलततिपरिधिः साधवो मञ्जरीवत् ।
पुष्पौघो दर्शनं चाऽभिमतपरिमलश्चारुचारित्ररूपः,
शस्तं सस्यं तपश्चाऽमरतरुरिव वः सिद्धचक्रं पुनातु ॥ १ ॥

आप्ताः सिद्धा मुनीन्द्राः प्रवरमुनिवराः वाचकाः साधवश्च,
श्वेता रक्ताश्चपीता बुधसमहरिताः कज्जलाभा जिनेशाः ।
चञ्चत्पुष्पाग्रपत्रच्छवि—कनकरजः—पर्णरोलम्बमाना ।
गीर्वाणा गा इवेष्टं सकलमतिमता पावनं संदिशन्तु ॥ २ ॥

सा वाणी गूहनेत्राद्रिघनपरिमिताः कर्मनिर्मूलकाना—
माचार्याणां रसत्रिर्नव नवमुनयो वाचकानां मुनीनाम् ।
विंशत्या सप्तयुक्ता मुनिकृतिसहिता नेत्रसङ्ख्या चतुर्णां,
षष्ठेशाब्धिस्वशक्तिर्गगनशरमिताः सद्गुणौघा जयन्ति ॥ ३ ॥

देवेन्द्रा अष्टवर्गा ग्रहगणसहिता गोमुखाद्याः परेऽपि,
चक्रेश्वर्यादिदेव्योऽपि च कुशलकराः सिद्धचक्रस्य भक्ताः ।
श्रीश्रीपालादिकानामिव सुषमभृतां प्राणिनां भक्तिभाजां,
शं स्ववृक्षं दिशन्तु प्रशमसुखफलं मुक्तिसौभाग्यबीजम् ॥ ४ ॥

( स्रग्धराछन्द. )

ज्ञात्वा प्रश्नं तदर्थं गणधरमनसं प्रावदद्वीरदेवः,
अर्हत्सिद्धार्यसाधुप्रभृतिनवपदान् सिद्धचक्रस्वरूपान् ।
ये भव्याः श्रद्धयाढ्याः प्रतिदिनमधिकं संजपन्ते स्वभक्त्या,
ते स्युः श्रीपालवच्च क्षितिवरपतयः सिद्धचक्रप्रसादात् ॥ १ ॥
दुस्तीर्णं निस्तरीतुं भवजलनिधिकं पाणियुग्मे गृहीत्वा,
यानेकान् कोटिकुम्भान् कनकमणिमयान् षष्ठिलक्षाभियुक्तान् ।
गङ्गासिन्धुह्रदानां जलनिधितटतस्तीर्थतोयेन भृत्वा,
तत्सर्वाधीश्वराणां सुरपतिनिकरा जन्मकृत्यं प्रचक्रुः । २ ॥
कुर्युर्देवास्त्रिवप्रं रजतमणिमयं स्वर्णकान्त्याऽभिरामे,
स्थित्वा स्थाने सुवाक्यं जिनवरपतयः प्रावदन् यां च नित्यम् ।
तां वाचा कर्णकूपे सुनिपुणमतयः श्रद्धया ये पिबन्ति,
ते भव्याः शैवमार्गागमविधिकुशला मोक्षमाशु प्रयान्ति ॥ ३ ॥
देवी चक्रेश्वरी स्रग्दधति च हृदये पत्तने देवकाख्ये,
कामे मोदाभिकीर्णे विमलपदयुते सिद्धचक्रस्य बीजे ।
श्रीमद्धर्षादियुक्तैर्विजयप्रभवरैर्वैर्यरूपैर्मुनीन्द्रैः,
स्तुत्या नित्यं सुलक्ष्मीविजयपदधृतैः प्रेमपूर्णैः प्रसन्ना ॥ ४ ॥

( ३ )

( उपजातिछन्दः )

जं भत्तिजुत्ता जिणसिद्धसूरि—ओज्झायसाहूण कमे नमंति ।
सुदंसणन्नाण तवो चरित्तं, पुअंतु पावेह सुहं अणंतं ॥ १ ॥

नामाइभेएण जिणिंदचंदा, निच्चं नया जेसि सुरिंदविंदा ।
ते सिद्धचक्कस्स तवे रयाणं, कुणंतु भव्वाण पसत्थनाणं ॥ २ ॥

जा अत्थओ वीरजिणेण पुव्विं, पच्छा गणिदेहि सुभासिओ अ ।
एयस्स आराहणतप्पराणं, सो आगमो सिद्धिसुहं कुणेउ ॥ ३ ॥

सव्वत्थ सव्वे विमलप्पहाई, देवा तहा सासणदेवयाओ ।
जे सिद्धचक्कंमि सयावि भत्ता, पूरितु भव्वाण महोरहं ते ॥ ४ ॥

( ४ )

भत्तिजुत्ताण सत्ताण मणकामणा—पूरणे कप्पतरुकामधेणूवमं ।
दुक्खदोहग्गदारिद्दनिन्नासयं, सिद्धचक्कं सया संथुणे सासयं ॥१॥

तिजगजणसंथुअपायपंकेरुहं, हेमरुप्पंजणासोगनीलप्पहं ।
सिद्धचक्कं थुणंताण कयनिव्वुइं, सव्वतित्थंकरा दितु नाणुन्नइं ॥२॥

जत्थ जिणसिद्धतह सूरिवायग जइ, दंसणं, नाणचरण तवं नवपइ ।
सिद्धचक्कस्स वण्णिज्जए तं सया, नमह सिरिवीरसिद्धंतमाणंदिआ ॥३॥

जक्खिणी जक्खगहवीरदिसिपालया, जयविजय जभिणीपमुहवरदेवया ।
दितु रुद्दाण खुद्दाण निन्नासगं, सिद्धचक्कं महंताण कल्लाणगं ॥४॥

( ५ )

( मालिनीछन्दः )

विपुलकुशलमाला—केलिगृहं विशाला—
ऽसमविभवनिधानं, शुद्धमन्त्रप्रधानम् ।

सुरनरपतिसेव्यं, दिव्यमाहात्म्यभव्यं,
निहतदुरितचक्रं, संस्तुवे सिद्धचक्रम् ॥ १ ॥

दमितकरणवाहं, भावतो यः कृताहं–
कृतिनिकृतिविनाशं, पूरिताङ्गिव्रजाशम् ।
नमितजिनसमाजं, सिद्धचक्रादिबीजं,
भजति सगुणराजिः सोऽनिशं सौख्यराजिः ॥ २ ॥

विविधसुकृतशाखो, भङ्गपत्रौघशाली,
नयकुसुममनोज्ञः, प्रौढसम्पत्फलाली ।
हरतु विनुवतां श्री–सिद्धचक्रं जनानां,
तरुरिव भवतापा–नागमः श्रीजिनानाम् ॥ ३ ॥

जिनपतिपदसेवा–सावधाना धुनाना–
दुरितरिपुकदम्बं, कान्तकान्तिं दधानाः ।
ददतु तपसि पुंसां, सिद्धचक्रस्य नव्यं,
प्रमदमिह रतानां, रोहिणीमुख्यदेव्यः ॥ ४ ॥

( ६ )

( अनुष्टुभ् )

अरा इव विराजन्ते, नव यत्र पदान्यलम् ।
कर्मवैरिभिदे चक्रं, सिद्धचक्रं नमाम्यहम् ॥ १ ॥

सिद्धचक्रं समाराध्य, प्राप्ता ये पदमव्ययम् ।
अद्भुतां पदवीं प्राप्य, ते जिनाः सन्तु वः श्रिये ॥ २ ॥

माहात्म्यं सिद्धचक्रस्य, पवित्रं यत्र वर्णितम् ।
चिरं नन्दतु मेदिन्या-मागमः स सुखागमः ॥ ३ ॥
श्रीमद् सिद्धचक्रमन्त्राऽ-धिष्ठाता सुरपुङ्गवः ।
शान्ति करोतु तुष्टिं च, सिद्धचक्रैकचेतसाम् ॥ ४ ॥

( ७ )

( आर्यागीति )

जिणसिद्धसूरिउवज्झाय, साहुसम्मत्तनाणचरणतवं ।
ईय नवपएहिं सिद्धं, नमामि सिरिसिद्धचक्कमहं ॥१॥
जे सिद्धचक्कमाराहिऊण, संपन्नकेवलालोआ ।
संपत्ता परमपयं, तित्थयरा ते सुहं दिंतु ॥ २ ॥
आरुग्गतुट्ठिदीहाऊ—अत्थहेउस्स सिद्धचक्कस्स ।
महिमा जेहिं वन्निज्जइ, पणमह तं वीरसिद्धंतं ॥ ३ ॥
सिरिसिद्धचक्कमाराहगाण, भविआण भत्तिजुत्ताणं ।
सम्मद्दिट्ठिदेवा, सव्वेवि कुणंतु कल्लाणं ॥ ४ ॥

( ८ )

*जगतीजनजीव ! सिद्धचक्र ! कमनीय—
प्रवचन ! जिनपुङ्गवसिद्धचक्रगणनीय ! ।
जय सूरिपुरन्दरवाचकमुनिमहनीय !,
दर्शनत्रिक ! तपसा [1]कमलविजयभजनीय ! ॥ १ ॥

---

१ जयम् । * इयं स्तुतिः चतुर्थः उच्यते । २ पू. आ. श्री विजयसेनसूरीश्वरजीमहाराजशिष्यपू मुनिराजश्रीकमलविजयेन कृतेयं स्तुतिः ।

## श्रीपर्यूषणापर्वस्तुतिः

### ( १ )

( शार्दूलविक्रीडितवृत्तम् )

भो भो भव्यजनाः सदा यदि शिवे, वाञ्छा तदा पर्वणः,
श्रीमत्पर्यूषणाभिधस्य कुरुत स्वाराधनं सादरम् ।
द्रव्यार्चां सुमचन्दनैः स्तुतिभरैः कृत्वा च भावार्चनां,
मानुष्यं सफलं विधत्त सुमहैरर्हन्मतोल्लासकैः ॥ १ ॥

कृत्वा मास्तिथिदिग्भवाब्धिवसुदिग् युग्मोपवासान् शुभान्,
रम्यार्चां च विधत्त भो! भवहरां तीर्थङ्कराणां नवाम् ।
षष्ठं वीरजिनान्तिमस्य चरितं कर्णैश्च पीत्वा मुदा,
वीरश्रीजननोत्सवे कुरुत सूल्लुध्वनीन् सर्वदा ॥ २ ॥

जीवानामवनं विधत्त सुधियः कृत्वाष्टमं नागवत्,
भाव्या निर्मलभावना भविजनैः कैवल्यलक्ष्मीकृते ।
कल्याणानि जिनस्य भो! गणभृतां वादं च पार्श्वप्रभो-
र्नेम्याद्यन्तरकाणि तं शृणुत सन्नाभेयवृत्तं तथा ॥ ३ ॥

साध्वाचारमखण्डितं पिबत सन्मौलं च सूत्रं श्रवैः-
चैत्यानां परिपाटिकां च तनुत स्वालोचनां वार्षिकीम् ।
जन्तून् क्षाम्यत वत्सलं कुरुत भोः! साधर्मिकाणां मुदा,
विघ्नौघं चतुरस्य वा हरतु सा सङ्घस्य सिद्धायिका ॥ ४ ॥

( स्रग्धराछन्दः )

पूजां कृत्वातिभक्त्या चरमजिनपतेः सप्तदिग्भेदयुक्तां,
प्रोद्दामाडम्बरेण प्रकटसुखकरीं पापहृद्युक्तियुक्ताम् ।
कार्यः स्नात्रोत्सवोऽपि प्रमदपरिभृतैर्धर्मनिष्ठैर्मनुष्यै-
रायाते पर्वघस्रे सुकृतपरिवशाद्वार्षिके पुण्यहेतौ ॥ १ ॥

कृत्वा शुद्धं प्रकृष्टं जनितधृतितपः कर्मनिर्घातनार्थं,
सर्वज्ञा वीतरागा विविधसुमगणैः पूजनीयाः प्रमोदात् ।
श्रोतव्यं वीरवृत्तं दृढतरमनसा सम्यगासेव्य षष्ठं,
माङ्गल्यं जन्मकृत्यं प्रतिपदि दिवसे ज्ञातपुत्रस्य कार्यम् ॥ २ ॥

घस्रानष्टावमारिं सकलजनपदे घोषयित्वा स्वशक्त्या,
कार्यं कैवल्यहेतुर्व्रतमतिसुखदं नागवच्चाष्टमाख्यम् ।
कल्याणानि स्वयम्भोः शृणुत गणभृतो गौतमादेर्विवादं,
वृत्तं श्रीपार्श्वनेम्योस्तदनु भविजनाः सान्तरं वार्षभीयम् ॥ ३ ॥

कल्पाख्यं मूलसूत्रं चरणगुणयुतं वाचितं तत्त्वविद्भिः,
श्राव्यं क्षम्याश्च जीवास्त्रिकरणशुचिभिश्चैत्ययात्रा च कार्या ।
कार्या सङ्घस्य पूजाऽशनविधिसहिता वार्षिके वासरेऽस्मि-
न्नानन्दं सङ्घसार्थे सपदि कुरु शुभे ! देवि ! सिद्धायिके ! त्वम् ॥४॥

# श्रीदीपमालिकास्तुतयः

## ( १ )

### ( शार्दूलविक्रीडितवृत्तम् )

पापायां पुरि चारुषष्ठतपसा पर्यङ्कपर्यासनः,
क्ष्मापालप्रभुहस्तिपालविपुलश्रीलेखशालां गतो
गोसे कार्तिकदर्शनागकरणे तुर्यारकान्ते शुभे,
स्वातौ यः शिवमाप पापरहितं संस्तौमि वीरं जिनम् ॥ १ ॥

यद्गर्भागमनोद्भवव्रतवरज्ञानाप्तिभद्रक्षणे,
संभूयाशु सुपर्वसन्ततिरहो चक्रे महस्तत्क्षणात् ।
श्रीमन्नाभिभवादिवीरचरमास्ते श्रीजिनाधीश्वराः,
संघायानघचेतसे विदधता श्रेयांस्यनेनांसि च ॥ २ ॥

अर्थात्पूर्वमिदं जगाद जिनपः श्रीवर्धमानाभिधः,
तत्पश्चाद्गणनायका विरचयांचक्रुस्तरां सूत्रतः ।
श्रीमत्तीर्थसमर्थनैकसमये सम्यग्दृशां भूस्पृशां,
भूयाद्भावुककारकं प्रवचनं चेतश्चमत्कारि यत् ॥ ३ ॥

श्रीतीर्थाधिपतीर्थभावनपरा सिद्धायिका देवता,
चञ्चच्चक्रधरा सुरासुरनता पायादसौ सर्वदा ।
अर्हच्छ्रीजिनचन्द्रगीः सुमतितो भव्यात्मनः प्राणिनो,
या चक्रेऽवमकष्टहस्तिमथने शार्दूलविक्रीडितम् ॥ ४ ॥

( २ )

( उपजातिछन्दः )

सिद्धार्थभूपालकुलावतंसं, विद्वन्मनोमानसराजहंसम् ।
माद्यद्बलीबर्द्दविराजहंसं, वीरं नुवे देवकृतप्रशंसम् ॥ १ ॥

राजी जिनानां ददतां सुखानि, भव्याङ्गिनां भक्तहितावहा सा ।
विश्वत्रयीकामितकल्पवल्ली, दीपालिकापर्वणि वन्द्यमाना ॥ २ ॥

सिद्धान्तवार्धिर्वरयुक्तिशुक्तिका—युक्तः सदालापकमौक्तिकाञ्चितः ।
मुनीन्द्रसत्पोतवणिग् निषेवितः, सदर्थयुक्तो ददतां सदर्थम् ॥ ३ ॥

मातङ्गयक्षोऽर्थिषु कल्पवृक्षः, वीरार्हतो भक्तिविधानदक्षः ।
लीलासमुन्मूलितविघ्नलक्षः, दीपालिकायां कुरुतां सुखानि ॥ ४ ॥

( ३ )

( द्रुतविलम्बितवृत्तम् )

नमत भव्यजना ! गणभृद्वरं, चरमदेवपदाम्बुजषट्पदम् ।
सकललब्ध्यतिशायिनमादरा—द्विनयतो नययुग् वचनश्रियम् ॥ १ ॥

जिनततिर्जयताज्जयदायिनी, प्रवरसौख्यकलापविधायिनी ।
असमलक्षणलक्ष्मविराजिता, त्रिभुवनाम्बुजभासनभास्करा ॥ २ ॥

जिनपतेर्वचनं श्रुतिसौख्यदं, भविकजाड्यतमस्तरणिप्रभम् ।
ललितसत्पदपद्धतिराजितं, शृणुत भव्यजनाः शिवसम्पदे ॥ ३ ॥

स्मरत भव्यजनाः ! श्रुतदेवतां, जिनवराननपङ्कजवासिनीम् ।
विदधतीं शुभदीपमहोत्सवे, भविकमानसकामितसम्पदम् ॥ ४ ॥

(४)

*जिनशासनभासन ! श्रीगौतमगणधर ! गुणनिधान ! ।
जिनसमुदयसमयसुरप्रधान ! जय दीपालीध्येयाभिधान ! ॥ १ ॥

(५)

*जय जयकरमङ्गलदीपक ! जिनवर–
वीर ! वीर ! श्रीगौतमगणधर ! ।
भवदवनीरदनीर ! प्रवचनजनसमुदयसुन्दर !,
सुरकोटीरदीपालीकमलामालतिलकवरहीर ! ॥ १ ॥

## (१) श्रीगौतमगणधरस्तुतयः

(रथोद्धताछन्दः)

गौतमान्वयपवित्रगौतमः, सप्तहस्ततनुकः स सिद्धये ।
अस्तु सत्समचतुरस्रसंस्थितः, केवलाय समभूद् विषादकः ॥ १ ॥
तीर्थकृत्ततिरियं भवे भवे, दुःखकूपनिपतज्जनान् भवेत् ।
पालनाय यतनापरायणा, कर्मशत्रुसुपुटीकृतोद्धुरा ॥ २ ॥
नैगमादिनयसंयुतागम–स्तीर्थकृद्वदनभाषणाग्रिमः ।
अन्यतीर्थिकमनश्चमत्कृतिः, शङ्करः सकलजन्मिनोऽस्तु वः ॥ ३ ॥
अम्बिकाऽभिधगरिष्ठदेविका, बिभ्रती श्रवणयोः सुकुण्डले ।
स्तूयमानगुणमण्डला जनै–र्विघ्नघातजनकाऽस्तु सन्ततम् ॥ ४ ॥

---

*इयं स्तुति चतुर्शः उच्यते । १–२ पू.आ.श्रीसेनसूरीश्वरजी-महाराजशिष्यमुनिश्रीकमलविजयेन कृतेयं स्तुतिः । ३ पू.-महोपाध्यायश्रीधर्मसागरगणिशिष्य पू.पं.श्रीगुणसागरगणिना कृते इमे स्तुती ॥

( भुजङ्गप्रयातछन्दः )

येदीयं प्रभाते स्फुरन्नामधेयं, गृहीत्वा ययुर्जन्मिनः कोटिसङ्ख्याः ।
शिवं यान्ति यास्यन्ति कुर्यात् कलानां,
कलापं कुकर्मारिभिद् गौतमो मे ॥ १ ॥

जगन्नाथपङ्क्तिः सुमुक्तिर्विमुक्तिः,
सशक्तिः सयुक्तिः सुभक्तिः सुभुक्तिः ।
प्रकामागता माहतामाविरामा,
यतीनां ततीनां रतीनां हृतीनाम् ॥ २ ॥

गुणैः शुद्धसिद्धान्त सिद्धान्त ऊर्ध्वान्तकृत्,
सदाभावतां सम्मतां दीयता पोषिताम् ।
दूरत्यन्तकष्टेन शिष्टेन लष्टेन वा,
स्फुरद्वर्णपूर्णैः सकर्णैः सकर्णैः श्रितः ॥ २ ॥

गलद्भारतीपीनपीयूषतुल्या, यदीया रणत्कारिकारिक्रमाब्जा ।
महामूल्यसन्नूपुराभ्या नवाभ्या,
सुखायाऽस्तु देवी सतां जन्मभाजाम् ॥ ४ ॥

---

१ पू. महोपाध्यायश्रीधर्मसागरगणिशिष्य पू पं. श्रीगुणसागरगणिना कृते इमे स्तुति ॥

( वसन्ततिलकावृत्तम् )

श्रीइन्द्रभूतिगणभृद् गणभृच्छुभानां,
भानां भजद्‌भविजनो विजनोऽपकण्ठः ।
कण्ठप्रियाभरणकैरणकैर्न शस्त–
शस्तश्रितैः सविबुधैर्विबुधैर्मुदे वः ॥ १ ॥

देवप्रभोर्विनमतो नमतोषदान–
दानस्फुरद्‌द्विपवतो पवतोऽघकृत्यात् ।
कृत्याद्धविष्टहृदयो हृदयोदयस्तं,
यस्तन्त्रमास निकरो निकरो जिनानाम् ॥ २ ॥

नानाङ्गवर्णरुचिरा रुचिराजमाना,
मानान्विता सुरपतेरपतेजसो न ।
सो–नत्विकाद्यवृजिना वृजिनावलीना,
लीनाङ्गचेतसि तवासितवाग् विभाति ॥ ३ ॥

भातिश्रियाऽमरवशारवशावरावै–
रावैरभासततमां ततमांसलोरूः ।
लोरूर्जिता जिनपदेऽनपदेवसेवे
सेवेहिका सकलया कलयाऽऽशु देवी ॥ ४ ॥

---

१ पू मुनिराजश्रीरविसागरजीमहाराजविरचिता यमकबद्ध-स्तुतिः ॥

( ४ )

( द्रुतविलम्बितवृत्तम् )

येदगमत् परशैलभृगौ तम–स्तदपि यद्भवता भुवि गौतम ! ।
ननुनिरस्तमतस्तव सेवकं, प्रति भवाम्बुधितः पव सेवकम् ॥ १ ॥
तनुविभास्तविकर्चनमण्डलं, कृतकृपं च कियज्जिनमण्डलम् ।
हृदि वहे व्रतिमानसभासुरं प्रणतनव्यकदिव्यसभासुरम् ॥ २ ॥
स्फुरितविभ्रमशुभ्रसरस्वती–श्रमितभङ्गिविभैकसरस्वती ।
भगवतो मधुराऽऽशु शुभेतराऽ–हसि रिपुप्रतिमा शुशुभेतराम् । ३॥
कठिनविघ्नशतात् श्रुतदेवते !, जिनपभक्तिमतः श्रुतदेऽव ते ।
विशदशासनगं वरमानवं, प्रतिदिनं मदिनं न रमानवम् ॥ ४ ॥

( ५ )

( उपजातिवृत्तम् )

श्रीइन्द्रभूतिं गणवृद्धिभूतिं, श्रीवीरतीर्थाधिपमुख्यशिष्यम् ।
सुवर्णकान्तिं कृतकर्मशान्तिं, नमाम्यहं गौतमगोत्ररत्नम् ॥ १ ॥
तीर्थङ्करा धर्मधुराधुरीणा, ये भूतभाविप्रतिवर्तमानाः ।
शक्तं च कल्याणकवासरस्था, दिशन्तु ते मङ्गलमालिकां च ॥ २ ॥
जिनेन्द्रवाक्यं प्रथितप्रभावं, कर्माष्टकानेकप्रभेदसिहम् ।
आराधितं शुद्धमुनीन्द्रवर्गै–र्जगत्यमेयं जयतात् नितान्तम् ॥ ३ ॥

१ पू. मुनिराजश्रीराजसागरजीशिष्यपू. मुनिराजश्रीरविसागर-जीमहाराजकृतेयं स्तुतिः ॥ २ पू. मुनिराजश्रीरविसागरजी-महाराजकृतेयं स्तुतिः ॥

सम्यग्दृशां विघ्नहरा भवन्तु, मातङ्गयक्षाः सुरनायकाश्च ।
दिपालिकापर्वणि सुप्रसन्नाः, श्रीज्ञानसूरिवरदायकाश्च ॥ ४ ॥

( ६ )

( अनुष्टुभ् )

श्रुत्वा श्रीवीरनिर्वाणं, जित्वा मोहमहाभटम् ।
अवाप्तकेवलज्ञानः, केवलं रातु गौतमः ॥ १ ॥

सिद्धा ये समयेऽतीते, सेत्स्यन्ति च भविष्यति ।
सिद्ध्यन्ति वर्तमानेऽस्मिन्, सिद्धिं यच्छन्तु तेऽखिलाः ॥ २ ॥

अर्थतो गदितस्तीर्थ—कृता बद्धस्तु सूत्रतः ।
गौतमेन गणभृता, सुखायाऽस्तु स आगमः ॥ ३ ॥

निर्ममे निर्ममेशस्य, गौतमस्य महोत्सवः ।
ज्ञानस्य यैः पञ्चमस्य, विघ्नं वो घ्नन्तु ते सुराः ॥ ४ ॥



# पंचमस्तरङ्गः

## ऋषभादिजिनस्तुतयः

### १ श्री ऋषभजिनस्तुतयः

( हरिणीप्लुतछन्दः )

श्रीनाभेयं योगिध्येयं देहज्योतिःसा[1]रङ्गं,
सर्वश्रेयः श्रेयः पद्यागत्यामाद्यत्सा[2]रङ्गम् ।
कर्मक्षोणीजन्मश्रेणी×श्रेणीध्वंसे सा[3]रङ्गं,
नौम्युत्कण्ठाव्यासस्वान्तः सौवस्थाम्ना सा[4]रङ्गम् ॥ १ ॥

अर्हद्वृन्दं कलशाऽऽनन्दं चञ्चच्चक्षुः सा[5]रङ्गं,
विश्वाऽसत्यव्याधाऽऽदित्यछायाभेदे सा[6]रङ्गम् ।
क्षा[7]माऽक्षेमं दक्षक्षोणीकौमुद्या मुत्सा[8]रङ्गं,
श्रेयोस्त्याः कण्ठाश्लेषे स्तोष्ये नन्दत्सा[9]रङ्गम् ॥ २ ॥

स्तौम्यध्वान्तं ध्वस्तध्वान्तं श्रीसिद्धान्तं सा[10]रङ्गं,
भव्याम्भोजेष्वाविर्भूताऽऽनन्दाऽम्भोरुट् सा[11]रङ्गम् ।
अज्ञानाऽऽलीपाथोदालीशत्या हृप्यत्सा[12]रङ्गं,
वन्दारूणां भीदारूणा वे[13]क्षोवृक्षे सा[14]रङ्गम् ॥ ३ ॥

---

१ सुवर्णम् ॥ २ अश्वम् ॥ ×श्रेणि°–मार्ग° ॥ ३ गजम् ॥ ४ सिंहम ॥ ५ मृगम् ॥ ६ राहुम् ॥ ७ कृशीभूतदुरितम् ॥ ८ चन्द्रम् ॥ ९ कामदेवम् ॥ १० सूर्यम् ॥ ११ हंसम् ॥ १२ वायुम् ॥ १३ पञ्जर० ॥ १४ शुकसदृशम् ॥

जैनाऽध्यक्षं दक्षं यक्षं खुप्टुच्छायासारङ्गं,
सौव्या वाण्या गाम्भीर्येण ध्वस्तोद्गर्जत्सारङ्गम् ।
अर्हत्सर्पद्वाक्योद्गर्जत्पर्जन्याऽम्भः सारङ्गं,
वन्दे क्रीडाकामक्रीडाकासारश्रीसारङ्गम् ॥ ४ ॥

( २ )

( उपजातिः )

*सज्ज्ञानलक्ष्म्याः सुनिवेशनार्थं, सन्मण्डपत्या सुषमाऽऽगमोत्था (?) ।
लसद्यदंसोपरि केशवल्ली, सदा मुदे वः स युगादिदेवः ॥१॥
त्रैलोक्यलक्ष्म्या वृतये स्वयं या, सम्मण्डपत्यार्हतचैत्यराजी (?) ।
साऽनित्यनित्या नमतां नृणां स्या-दनित्यनित्याय सुखाय नित्यम् ॥२॥
सत्तीर्थलक्ष्म्या वसतौ हि रङ्गात्, श्रीमण्डपत्यास्तृतसूत्रितं यत् । (?)
तदस्तु मे जैनीवचः प्रपञ्चि, सुवाचनं प्रावचनं सुवाच्यं ॥ ३ ॥
श्रीसङ्घलक्ष्म्या सुचिरं सदा ये, सुमण्डपन्तीह सुरापुरिभिः (?) ।
सङ्ख्यावृतव्यावृतभावभावाः, सुदृष्टयः सन्तु सुदृष्टये ते ॥ ४ ॥

( ३ )

( उपजातिः )

श्रीनाभिसूनो वस सिद्धिपूर्यां, निःशेषशर्मावलिपूरितायाम् ।
दुष्टाष्टकर्माऽवनिभृद्विनाश–सुधाऽशनाधीश्वरसिद्धिदाता ॥ १ ॥

---

* पू. मुनिकुंजरश्रीधर्मकीर्तेः कृतिरियम् ॥ १ प्रवाल-सदृशम् ॥ २ मेघसदृशम् ॥ ३ चातकम् ॥ ४ कमलम् ॥

समस्ततीर्थप्रभवः प्रकृष्ट–प्रभावयुक्ता ददतां सतां शम् ।
सुखप्रभाबाधितशीतपादाः, समर्थ्यशक्रालिनिषेव्यमाणः ॥ २ ॥

राद्धान्त एष प्रकरोतु सिद्धिं, क्षीणाऽष्टकर्माऽऽननपद्मजातः ।
निर्देशतस्तीर्थकृतां गणेशाः सूत्रं यदीयं रचयाम्बभूवुः ॥३॥

चक्रेश्वरी सा मम मङ्गलाऽऽली–महर्निशं मङ्क्षु सुरी तनोतु ।
सूरीश्वराऽऽनन्दगुरोर्गणे या, समीहितं राति सुहंसवाणी ॥ ४ ॥

(४)

(वसन्ततिलकावृत्तम्)

श्रीसूरिहर्षविनयप्रभुताप्रतिष्ठा–
श्रीसूरिहर्षविनयस्मरणीयरूपः ।
श्रीसूरिहर्षविनयध्वनिरत्नराशौ,
श्रीसूरिहर्षविनयः प्रथमः श्रियेऽर्हन् ॥१॥

पूज्याः सहर्षविनयस्तुतपादपद्मा–
स्तीर्थस्थहर्षविनयश्रियमादधानाः ।
सर्वत्र हर्षविनयस्वनसन्निधान्ना,
यच्छन्तु हर्षविनयप्रसृतं जिनास्ते ॥२॥

सूरीशहर्षविनयद्विपदर्पपायी,
सूरीशहर्षविनयस्थितिकेसरश्रीः ।
सूरीशहर्षविनयप्रियकक्षशाली,
श्रीरागमो हरिरिवोत्तमधर्महंसः ॥ ३ ॥

श्रीधर्महंसललने नलिनीसधर्म–
श्रीधर्महंसनमनाः कमला श्रुतेशा ।
पद्मा श्रियेऽस्तु भविनां गुरुधर्महंस–
श्रीधर्महंससुमहाविजयाजयाऽम्बा ॥ ४ ॥

## १ सोपारकपुरमण्डनश्रीऋषभजिनस्तुतिः

( शार्दूलविक्रीडितम् )

श्रीसोपारकपत्तनाऽद्भुतरमारामाशिरः शेखरं,
श्रीनाभिक्षितिपालवंशकमलप्रोल्लासने भास्करम् ।
माद्यन्मोहमदाऽष्टकक्षयकरं मोक्षाऽध्वनिस्पन्दनं,
भक्त्याऽऽदीशजिनं स्तुवे प्रतिदिनं श्री जीवितस्वामिनम् ॥१॥

पञ्चैरावतपञ्चभारतमुखक्षेत्रेषु ये संस्थिता,
भूताऽनागतवर्तमानजिनपा विश्वत्रयीवन्दिताः ।
लोकाऽलोकविलोकिकेवलमहाज्ञानश्रिया संश्रिता–
स्तेषां श्रीपदपङ्कजं भवभिदे भूयाज्जिनानां सदा ॥ २ ॥

श्रीसिद्धान्ततरुः पदत्रयमहामूलोऽखिलाङ्गस्फुर–
च्छाखाभिः समलङ्कृतो वरतरोपाङ्गप्रशाखाऽन्वितः ।
अर्थश्रेणिसुगन्धिपुष्पनिकरैः संवासिताऽऽशामुखो,
देयान्मोक्षफलं जरामृतिहरं भव्यावलीनां सदा ॥ ३ ॥

श्रीमन्नादिजिनेन्द्रपादकमलप्रोद्यन्नखालीविभा–
श्रेणीनव्यपरागपूरमधुपः श्रीगोमुखो यक्षराट् ।

विघ्नोघप्रबलाऽन्धकारनिकरप्रध्वंसनेऽहर्मणि–
र्भव्यानां सततं तनोतु विशदा नानाविधाः सम्पदः ॥४॥

(२)

(वसन्ततिलकावृत्तम)

श्रीकुङ्कणाख्यविषयस्थितपत्तनश्री–
सोपारकाऽवनितलामलभूषणाऽऽभ ! ।
श्रीमद्युगादिजिननायक ! मौलिनाऽहं,
भक्त्या वहे तव पदाऽब्जयुगं जिनेश ! ॥ १ ॥

राज्यं विहाय सकलं तृणवद् गृहीतः,
श्रीसंयमो नरसुराऽसुरसाक्षिकं यैः ।
ते तीर्थपा ऋषभदेवमुखाः सुखानि,
त्रैलोक्यलोकनिवहस्य सदाऽपि दद्युः ॥ २ ॥

श्रीतीर्थनाथमुखपङ्कजजन्मभूमि–
र्मोहान्धकरनिकुरुम्बविनाशभानुः ।
उद्भासिताऽखिलजगत्त्रितयस्वरूपः,
श्रीआगमो दिशतु मे शिवसौख्यलक्ष्मीम् ॥ ३ ॥

सोपारकप्रवरतीर्थपतेः पदाब्जं,
या सेवते मधुकरीव मुदा सदापि ।
चक्रेश्वरी सुरसुरीनिकरेण सेव्या,
सा सङ्घलोकनिवहस्य सुखं चिनोतु ॥ ४ ॥

## श्रीअजितजिनस्तुतिः

(उपजातिः)

*नमाम्यहं श्रीविजयाङ्गजातं, समीहितोत्सर्जनपारिजातम् ।
उन्निद्रहेमाम्बुजचारुकान्ति, सौवाननश्रीजितशुभ्रकान्तिम् ॥ १ ॥

तमाप्तसङ्घातमहं वहामि, श्रीखण्डकाश्मीरजपुष्पमुख्यैः ।
प्रचण्डमार्तण्डविमानकान्ति यद्धर्मचक्रं गगने चचाल ॥ २ ॥

श्रीद्वादशाङ्गीत्रिदशापगा या, सर्वज्ञगौरीजनके प्रशस्ता ।
मुखाब्जशोणात्प्रससार विश्वे, निःसृत्य सा कर्ममलं जहातु ॥ ३ ॥

श्रीरोहिणी सा विदधातु भद्रं, शरीररोचिर्जितरोहिणीशा ।
सद्रोहिणीनन्दनगौरकीर्तिः, संरोहिणी सर्वतमोभरेषु[1] ॥ ४ ॥

## (१) श्रीशम्भवजिनस्तुतिः

(उपजातिः)

*अभिष्टुमः शम्भवतीर्थराजं, नमन्नराऽमर्त्यसुराधिराजम् ।
जितारिसन्ताननभोनभोगं, सम्प्राप्तकैवल्यवशोपभोगम् ॥ १ ॥

जिनोत्तमास्ते सततं समग्रा, रक्षन्तु संसारभयान्मनुष्यान् ।
यद्दर्शनात् कल्कगणाः प्रणाशं, प्रयान्ति मेघादिव [2]वेणुवाराः ॥२॥

श्रीवीतरागाऽऽगमवीचिमालि–पुत्रीहृदीशाऽग्रज एष नित्यम् ।
अज्ञानभूमीधरमाशु सप्त–नयस्फुरद्वज्रधरो निहन्तु ॥ ३ ॥

---

* पू. आ. श्री विजयानंदसूरीश्वराणां पट्टशिष्य पू० मुनिशेखरश्रीलक्ष्मीविजयाणां विनेयमुनिराजश्रीहंसविजयस्य कृतिरियम ॥ 1 व्रणेषु ॥ 2 रेणुवाराः ॥

हर्षं प्रकर्षं मम मानसीयं, दद्याद् सुरी राजमरालयाना ।
वज्रं करे वारिजनेत्रयुग्मा, विद्युल्लतागात्ररुचिर्दधाना ॥ ४ ॥

(२)

(द्रुतविलम्बितम्)

चरणपद्मयुगं प्रणमाम्यहं, तव भवोच्छ्रितताप[1]मलाऽपहम् ।
अमरकोटिभिरर्चितमादरा–दमदशंभवनाथ ! गुणाऽम्बुधे ! ॥१॥

भवभयात्किल पान्तु जिनोत्तमा, मदनपर्वतभेदभिदूपमाः ।
गतरूजः क्षतनाशजरोद्भवा, असुमतां शिवशर्मकृतश्च माम् ॥२॥

कुमतमत्तमतङ्गजमारणे, नयचितः समयो नखरायुधः ।
तव भवाऽम्बुनिधौ खलु मज्जतां, प्रवहणं भविनां [2]भवनाशनम् ॥३॥

त्रिभुवने त्रिमुखस्त्रिकयोगिनां, कु[3]रु तृतीयजिनेश्वरशासने ।
तनुमतां दुरितं दुरितारिका, हरतु यच्छतु कीर्तिशुभश्रियम् ॥४॥

## श्री अभिनन्दनजिनस्तुतिः

(वसन्ततिलका)

*वन्देऽभिनन्दनजिनं जनरञ्जनं तं,
श्रीसंवराऽन्वयसुराऽऽलयवज्रपाणिम् ।

---

1 शिरो ॥ 2 भय ॥ 3 वर० ॥ * पू. आ. श्रीविजयानन्दसूरीश्वराणां पट्टशिष्य पू. मुनिशेखरश्रीलक्ष्मीविजयाणां विनेयमुनिराजश्रीहंसविजयस्य कृतिरियम् ।

सावद्ययोगविरतं रततोयवाह–
प्रोज्जासनोद्धतसमीरणमाप्तसातम् ॥ १ ॥
भव्या जिनेश्वरगणं श्रयत प्रकामं,
यूयं क्षमारसपयःसरिदीशचन्द्रम् ।
श्रेयस्करं सुकृतिनां नतकन्धराणां,
यं देवताऽधिपतयः प्रणमन्ति शश्वत् ॥ २ ॥
सम्यग्दृशा जिनवराऽऽगमसत्कुमारो,
हर्षं चिनोतु सुतरां प्रियवाक्यसारः ।
रम्यस्वरः सुगतिदर्शनदायिदेह',
स्फूर्जद्गुणावलियुतो जगति प्रतिष्ठः ॥ ३ ॥
वज्राङ्कुशी सकलशर्मविधायिनी सा,
पुंसां सुखं प्रवितनोतुतरा मृगाक्षी ।
याऽनेकपं श्रितवती दधती कराभ्यां,
दम्भोलिमङ्कुशमलं च मरालभासम् ॥ ४ ॥

## श्रीसुमतिजिनस्तुतिः

(तोटकम्)

*सुमते ! सुमते ! ऽसुमतां सुतरां, सुगतिप्रद ! मेघमहीशसुत ! ।
तव दर्शनमत्र मनोज्ञमपा–कुरुताद्दुरितं चिरकालभवम् ॥१॥

---

* पू. आ. श्रीविजयानन्दसूरीश्वराणां पट्टशिष्य पू मुनिशेखरश्रीलक्ष्मीविजयाणां विनेयमुनिराजश्रीहंसविजयस्य कृतिरियम् ।

विततान यदीय जनुः सुमहं, शिखरे तपनीयगिरेः प्रमदात् ।
शतयज्ञततिस्तपनीयघटैस्त—महं प्रणमामि जिनेशगणम् ॥ २ ॥
भगवन्नवतात् भवतो वचनं, भवतो भवतो भवभीतिहरम् ।
कुमतोत्कटहस्तिमृगेन्द्रसमं, दुरितव्रततिक्षयसामभवम् ॥ ३ ॥
समवाऽम्बुददेहरुचिर्भयतो, मनुजान् बत कालि सदा सदया ।
अवनीधरभृद्ददया सहिता, सहिता महिताऽमलदन्ततति: ॥ ४ ॥

## श्रीपद्मप्रभजिनस्तुतिः
(वसन्ततिलका)

*पद्मप्रभः प्रतिदिनं प्रददातु पद्मां,
प्रौढप्रमादपवनाशनपन्नगारिः ।
श्रीमद्धरक्षितिपतेः कुलमेरुकल्पो,
रक्ताङ्कभूवनरुची रुचिरप्रभावः ॥ १ ॥

संसारनीरनिधिपीतसरिद्धृदीशा—
स्तीर्थङ्कराः शुभभरं मम ते दिशन्तु ।
सन्त्यज्य ये नृपरमां गजवाजियुक्तां,
मुक्तिश्रिये तृणमिवाऽऽददिरे तपस्याम् ॥ २ ॥

मूर्ध्ना वहे जिनवराऽऽगमपुण्डरीकं,
सद्भङ्गजालदलसञ्चयपूरिताङ्गम् ।

---

* पू. आ. श्रीविजयानन्दसूरीश्वराणां पट्टशिष्य पू. मुनिशेखरश्रीलक्ष्मीविजयाणां विनेयमुनिराजश्रीहंसविजयस्य कृतिरियम् ॥

सप्तप्रधाननयनालविराजमानं,
विद्वत्पडङ्घ्रिसुखदं पद्मवारिसंस्थम् ॥ ३ ॥
गौरी सुरी मम सदा विदधातु भद्रं,
कुन्देन्दुशङ्खरजताचलचारुकान्तिः ।
प्रध्वस्तदोषनिचया निचिता गुणौघैः,
सारङ्गशावनयना जयदायिनीयम् ॥ ४ ॥

## श्रीसुपार्श्वजिनस्तुतिः

*सुपार्श्व ! तीर्थनायक !, कुरुष्व मे मनोगृहे ।
निरन्तरं मुदाऽऽस्पदं, शिलीमुखो यथाऽम्बुजे ॥ १ ॥
स्वयम्भुवां व्रजं सदा, नमामि नम्रनाकिपम् ।
समस्तसौख्यदायकं, निरस्तपञ्चसायकम् ॥ २ ॥
जिनेन्द्र ! राजते तवा—ऽऽगमो गमावलीयुतः ।
स्फुरन्नयाऽब्जभास्करः, कुवादिदन्तिकेसरी ॥ ३ ॥
ममाश्वकल्पनायकः[1], करोतु मङ्गलावलिम् ।
त्रिकालवित्सुपार्श्वपत्, सरोजहंससन्निभः ॥ ४ ॥

## श्रीचन्द्रप्रभजिनस्तुतिः

*महसेनमहीपुरन्दरकुल—कोटीरलसन्मणिप्रभम् ।
प्रणुमो वयमत्रिनेत्रजाऽनु—कृतिश्लोकमघाऽपहं जिनम् ॥ १ ॥

---

1 °ष° । * पू. आ श्रीविजयानन्दसूरीश्वराणां पट्टशिष्य पू. मुनिशेखरश्रीलक्ष्मीविजयाणां विनेयमुनिराजश्रीहंसविजयस्य कृतिरियम ॥

जिनराजततिस्तनोतु वः, सततं निर्वृत्ति निर्वृतिप्रदम् ।
प्रतिबोध्य जनानदर्शयद्,वृषमार्गं खलु या कृपाऽऽस्पदम् ॥२॥
शरणीक्रियतां जिनाऽऽगमो, हृदये भव्यजन ! त्वयाऽनिशम् ।
कुनयोद्धतशैलवज्रभृद्, भगवद्वक्त्रसरोजसम्भवः ॥ ३ ॥
विनताऽङ्गजमाऽऽश्रिता सदा, प्रतिचक्राऽस्तु सतां विभूतये ।
विफलीकृतशत्रुमण्डलं, दधती चक्रमयोमयं शये ॥ ४ ॥

## श्रीवागड्द्रमण्डनश्रीचन्द्रप्रभयुगादिजिनस्तुतिः

( शार्दूलविक्रीडितम् )

धर्मं कर्तुमहो महोत्सवमिव द्वेधापि सार्वोदितं,
बाह्याऽभ्यन्तरवैरिवारमतिदुर्वारं विजेतुं द्रुतम् ।
श्रीचन्द्रप्रभतीर्थनायकमथ श्रीमद्युगादीश्वरं,
सेवे सातिशयं पुराणमनिलं सद्वागड्द्रप्रभुम् ॥ १ ॥
दुर्जेयोऽपि जगज्जनैर्जिनवरैर्यैर्मोहराजो जवा-
ज्जिग्ये प्राप्यतिशायिनी च पदवी विश्वार्हणीया सताम् ।
त्रैलोक्यैकविलोकनाः शिवपुरीसार्थैकसम्मीलनाः,
भूमीमण्डलमण्डनाः कलिमलप्रक्षालनास्ते श्रिये ॥ २ ॥
या जैनेन्द्रवचः प्रदीपरुचयः सम्यग्दृशामेव सद्-
बोधोद्योतकराः समं त्रिभुवनेऽप्याशाः प्रकाशाः पुनः ।
नो दोषोदयतामसाश्रयसमस्नेहोदयाः कुत्रचित्,
ता मोदेन सदाशये शिवपथज्ञानाय कुर्वीमहि ॥ ३ ॥

श्रीचन्द्रप्रभदेवसेवकतया येऽत्र श्रुतदेवताः ।
क्षेत्राधीशविनायका अपि भृशं सम्यग्दृशां वत्सलाः ।
ये चान्येऽपि सुरा जिनप्रवचनप्रोल्लासनालालसाः,
सन्त्वस्मत्सुकृतान्तरायहतये सम्पत्तये श्रेयसाम् ॥ ४ ॥

## श्रीश्रेयांसजिनस्तुतिः

(उपजातिः)

अस्सेयदेविं दलियं व मुत्ती, सेज्जंसमेयं सुयधम्मकित्तिं ।
करिं सुमेयं जमिहं अविज्जाणं—दोलगिण्हंपि तमज्ज ! कुज्जा ॥१॥

[1]जे धम्मकित्तिसिवसंति विमुत्तिविज्जा—
णंदप्पयाणप्पविहाणविहायसज्जा—
देविंदविंदपरिविंदपयारविंदा,
ते मुत्तिजुत्तिमिह दिंतु जिणिंदचंदा ॥ २ ॥

[2]तेसिं सप्पुसधम्मकित्तियमिणं देविंदचक्कित्तणं,
संपुण्णे सरियाइसाहसगुणं लोगुत्तमुक्कित्तणं ।
विज्जाणंदपहाणमुत्तिपयवीसंपायणं सव्वया,
झायंतीह जिणिंदचंदवयणं जे सव्वया सव्वया ॥ ३ ॥

[3]निच्चं देविंदसूरी जियमइविहवा जे सुयंगीइनाम,
झायंता हुंति सत्ता तमतिमिरभिया धम्मकित्तिलयंता ।

---

१ वसन्ततिलका ॥ २ शार्दूलविक्रीडितम् ॥ ३ स्रग्धरा ॥

जं पारीणत्तणंभोधिवियइ अहरा सव्वसत्थुत्तमाणं,
विज्ञाणंदेव एसा जिणवर वयणे भत्तिराणं नराणं ॥ ४ ॥

## श्रीनेमिजिनस्तुतिः

(स्रग्धरा)

राज्यं राजीमतीं च त्रिदशशशिमुखीगर्वसर्वंकषा यः,
प्रेमस्थामाऽभिरामां शिवपदरसिकः शैवक श्रीवुवूर्षुः ।
त्यक्त्वा च्चोद्दामधामा सजलजलधरश्यामलस्निग्धकाय–
च्छायः पायादपायादुरुदुरितवनच्छेदनेमिः सुनेमिः ॥ १ ॥

दातारो मुक्तिलक्ष्मी मदमदनमुखद्वेषिणः सूदितार–
स्त्रातारः पापपङ्कात्त्रिभुवनजनतां स्वश्रिया भासितारः ।
स्रष्टारः सद्धिधीनां निरुपमपरमज्योतिषां वेदितारः,
शास्तारः शस्तलोकान्सुगतिपथरथं पान्तु वः तीर्थनाथाः ॥२॥

पीयूषौपम्यरम्यां शुचिपदपदवीं यस्य माधुर्यधुर्यां,
पायं पायं व्यपायं भुवि विबुधजनाः श्रोत्रपात्रैः पवित्रैः ।
जायन्ते जाड्यमुक्ता विगतमृतिरुजः शाश्वतानन्दमग्नाः,
सोऽयं श्रीधाम कामं जयति जिनवचःक्षीरनीराब्धिनाथः ॥३॥

या पूर्वं विप्रपत्नी सुविहितविहितप्रौढदानप्रभाव–
प्रोन्मीलत्पुण्यपूरैरमरमहिमा शिश्रिये स्वर्गिवारम् ।
सा श्रीमन्नेमिनाथप्रभुपदकमलोत्सङ्गशृङ्गारभृङ्गी,
विश्वाऽम्बा वः श्रियेऽम्बा विपदुदधिपतद्दत्तहस्ताऽवलम्बा ॥४॥

## १ श्रीपार्श्वजिनस्तुतयः

निष्ठुरकमठमहासुर-विदलितमानं प्रनष्टकर्मरिपुम् ।
पार्श्वं नतोऽस्मि शिरसा, सम्प्राप्तमनन्तसौख्यपदम् ॥ १ ॥
येषां नामग्रहणात्प्रलयं, यान्तीह सर्वदुरितानि ।
ते नो दिशन्तु भद्रं, जिनेन्द्रचन्द्राः सदा विपुलम् ॥ २ ॥
या श्रूयते प्रहृष्टैर्विगलितमहामोहमत्सरैः सत्त्वैः ।
सा वाग् भवभीतिहरा, नित्यं सुखदाऽस्तु मम जैनी ॥३॥
रुच्येन्द्र(?)नीलवर्णा भुजगा-ऽऽभरणैः कृताऽवयवशोभा ।
वैरोट्या मे भद्रं, ददातु धरणेन्द्रवरपत्नी ॥ ४ ॥

( २ )

( मालिनी )

निहतभवनिवासं, नीलराजीवभासं,
कृतभुवनविकासं, दूरमुच्छिन्नहासम् ।
पणमह जिनपासं, देहमापूरियासं,
सवणमहुरभासं, खीणसव्वप्पयासं ॥ १ ॥
हतनतभवकारं, प्राप्तनिर्वृत्यगारं,
स्तुतजिनवरवारं, क्लृप्तमोहापहारम् ।
धुयमयणवियारं, सच्चकारुण्णसारं,
बहुमुणिपरिवारं, सिद्धरामोरुहारम् ॥ २ ॥
त्रिदशविहितनामं, पूरिताऽनेककामं,
श्रुतमपहृतकामं, संश्रयध्वं निकामं ।

पडिहयनयवामं, दिण्णनिव्वाणरामं,
कयदुरियविरामं, सव्वलोयाभिरामं ॥ ३ ॥
जडिमजलधिनावं, प्राज्यदीप्रप्रभावं,
भवतरुवनदावं, चन्द्ररोचिः स्वभावम् ।
पवरगुणकलावं, संवहन्ति अपावं,
कुणउ विगयतावं, भारई तुम्ह भावम् ॥ ४ ॥

( ३ )

विश्वस्वामी जीयात् पार्श्वः ॥ १ ॥
ते जिनाः सततं सन्तु मे शान्तये ॥ २ ॥
मोहान्धानामेकं चक्षुः सिद्धान्ते मे सिद्धिं दद्यात् ॥ ३ ॥
रक्षतु विघ्नाच्छासनदेवी, रातु विशालां मङ्गलमालाम् ॥ ४ ॥

( ४ )

( वसन्ततिलका )

*श्रीपार्श्वदेव ! जिनराजिमताऽभिराम !,
कल्याणदायि ! कममानमममानमानम् ।
त्वं मे तनूच्चनगराजसमाचलश्रीः,
श्रीमत्प्रभोर्विजयसेनगुरोःप्रतापम् ॥ १ ॥

( ५ )

( वसन्ततिलका )

*विश्वातिशायि ! महिमा सुरसार्थसेव्य !,
श्रीश्लाघ्यपार्श्वजिननायक ! पूरितार्थ ! ।

---

* इयं स्तुतिः चतुर्शः उच्चते ।

सर्वज्ञवन्द्यपरमागमवीतराग !,
सर्वार्त्तिशान्तिकर ! देहि शिवश्रियं मे ॥ १ ॥

## श्रीगोडीपार्श्वजिनस्तुतिः

त्रिभुवनजनपावनमानसमानसहंस !,
भारतभूमण्डलकमलविबोधनहंस ! ।
पूरय मम कामितमतिशयजगदुत्तंस !,
प्रियगौडीमण्डनपार्श्वजिनेशाऽवतंस ! ॥ १ ॥

श्रीभरतैरावतवरविदेहविजयन्तं,
नन्दीश्वरकुण्डलरुचकादिषु विलसन्तम् ।
असुरव्यन्तरसुरभवनादिषु जयवन्तं,
प्रणमामि जिनाधिपसङ्घमनघभगवन्तम् ॥ २ ॥

प्रवचनवचनाऽमृतपानमनन्तहिताय,
प्रशमप्रसराऽद्भुतरसपूरितमुचिताय ।
कुरु कुरु सुभगत्वं महिमवतामुचिताय,
भवतापभिदे तव भवति यदुल्लसिताय ॥ ३ ॥

प्रज्ञप्तीगौरीप्रमुखसुरीस्तवनीये !,
भगवति ! पद्मावति द्युतिनिर्जिततपनीये ! ।
धरणेन्द्रमनःप्रियपार्श्वक्रमशयनीये !,
प्रीणय लयलीनं कमलविजयभजनीये ! ॥ ४ ॥

# १ श्रीवर्द्धमानजिनस्तुतयः

(द्रुतविलम्बितम)

सकलमङ्गलमञ्जुलकन्दलं, गुणगणालयकं शिवशम्बलम् ।
जिनवरं हि नमामि सदा युतं, सुमनसा मनसा त्रिशलासुतम् ।।१।।

अशुभकन्दनवन्दनमालिका, धवलमङ्गलमञ्जुलबालिकाम् ।
जितमनोजिनराजपरम्परां, प्रतिनमामि नमामि शुभङ्कराम् ।। २ ।।

जिनवरेण जयाय हितोदितं, गणधरेण धिया गुरुगुम्फितम् ।
नमतु तन्मनसा जनसन्तती, रसमयं समयं समयं प्रति ।।३।।

रणझणत्पदनुपूरपेशला, वदनमण्डितशीतलभाकला ।
सकलसङ्घसुखाय विनोदिता, भवतु भासनशासनदेवता ।। ४ ।।

(२)

(उपजातिः)

श्रीवर्द्धमानाऽभिधतीर्थराज–पदारविन्दं विधिना निषेवे ।
सद्धर्मलक्ष्मीवरकेलिगेहं, सदा सदाऽऽनन्दपदं सतां तु ।। १ ।।

असौ जिनौघः प्रददातु नित्यं, भव्याङ्गिनां भक्तिमतामभीष्टम् ।
यद्देशनावारिदवर्षणेन, सद्धर्मशाखी नवपल्लवः स्यात् ।। २ ।।

श्रीजैनसिद्धान्तमपारभद्रं, ध्यायामि तत्त्वार्थयुतं पवित्रम् ।
सम्यक्तया निर्वृतिशर्मकार–मन्तःसमाधाननिदानमेव ।। ३ ।।

श्रीवीरतीर्थेशपदाऽनुरक्तः, सर्वानुभूतिः सततं श्रिये स्तात् ।
सिद्धायिका शासनदेवता च, धर्मार्थिनां धर्मधुरन्धराणाम् ।।४।।

( ३ )

नताऽशेषलेखं कृतद्वेषपेषं जगत्तोषपोषं लसद्दोषमोषम् ।
अयोषं सयोषं विनिर्धूतरोषं, नमस्यामि वीरं धराधीशधीरम् ॥१॥
प्रशस्तप्रसादं[1] समस्तप्रसादं[2], समस्तप्रसादं[3] सुगम्भीरनादम् ।
स्तुमस्त्वामुदारं[4] महत्तापदारं[5], महत्तापदारं[6] जिनस्तोममारम्[7] ॥२॥
सदङ्गं सदङ्गं सदं गद्यपद्य—प्रधानं निधानं मुदः पातु सद्यः ।
मतं मे मतं मेदुरक्रोधयोध—प्रमाथं सनाथं गमैर्जैननाथम्[8] ॥३॥
महस्वल्ललाटस्ततोरः[9] कपाटः, स्फुरच्चण्डदण्डः कृताराति खण्डः ।
शुभच्छत्रहस्तः कविस्तोमशस्तः, स्यतु ब्रह्मशान्तिर्भयं स्वर्णकान्तिः ।४

( ४ )

नमत त्रिभुवनसारं जितमारं हारतारगुणवारम् ।
वीरं कान्तशरीरं गीरिधीरं पापमलनीरम् ॥ १ ॥
नमदमरविसरमणिमुकुटकोटितटघटितमसृणनखमुकुरान् ।
जिनराजः शिवभाजः स्मरत त्रैलोक्यसम्राजः ॥ २ ॥
विलसत्कुबोधसन्तमससञ्चयापचयकरणखरकिरणम् ।
ध्यायत जैनकृतान्तं नितान्तं ततभवकृतान्तम् ॥ ३ ॥
विदलन्नवीनसरसीरुहकृतनिवासा विकासकमलकरा ।
विमलयतु मम मनीषां, हरहसितसितप्रभादेवी ॥ ४ ॥

---

1 प्रमादम् ॥ 2 प्रमादम् ॥ 3 प्रमादम् ॥ 4 तमस्तोमदारम् ॥
5 महत्पापदारम् ॥ 6 महत्पापदारम् ॥ 7 सारम् ॥
8 °गमाज्जैननाथम् ॥ 9 रक्तपालस्ततोरक्तपालः ॥

( ५ )

अमहेलं अमहेलं अमहेलं सहस्सपत्तपडिबोहे ।
सत्तासं सत्तासं सत्तासं मह महावीरं ॥ १ ॥
कमलासा कमलासा कमलासा सियविणीयनीय जणा ।
संसारं संसारं संसारं दलयउ जिणाली ॥ २ ॥
सवणेहिं सवणेहिं सवणेहिं सावहेवहेलकरिं ।
अमयरसं अमयरसं अमयरसं भयसुहं पीयं ॥ ३ ॥
सयवत्तं सयवत्तं सयवत्तं भारइ वहंती वो ।
सियपक्खा सियपक्खा सियपक्खा वड्डिया अवउ ॥ ४ ॥

( ६ )

( मालिनी )

प्रणतसुरनरेन्द्रस्फारकोटीरकोटी–
घटितमणिमयूखक्षीरधौताऽङ्घ्रिपद्मः ।
जयति जयरमायाः सद्मदीपालिकाया–
मुदितशिवसुखश्रीः श्रीमहावीरदेवः ॥ १ ॥

विशदकुसुदबन्धुज्योतिरुद्योतिलोकं,
पृणगुणमणिमालारोहणक्ष्माधरक्ष्मा ।
त्रिभुवनजनगेयध्येयपुण्यप्रभावा,
भवतु जिनवराणा सन्ततिः श्रेयसे वः ॥ २ ॥

सुकृतकमलराजीबोधनब्रध्नतुल्ये,
शिवशिवपुरमार्गोद्योतदीप्रप्रदीपे ।

जगदखिलजनानां मोहनिद्रापहारो-

षसि वचसि जिनानामस्तु मे धीप्रकाशः ॥ ३ ॥

चरमजिनवरेन्दोस्तीर्थरक्षाधिकारे !,

कृतजगदुपकारे ! स्फारशृङ्गारसारे ।

प्रणत-सुरसमूहे ! देवि ! सिद्धायिके ! त्वं,

भव भविकजनाना सिद्धये वृद्धये च ॥ ४ ॥

( ७ )

( अनुष्टुभ् )

नमोऽस्तु वर्द्धमानाय, स्पर्द्धमानाय कर्मणा ।

तज्जयावाप्तमोक्षाय, परोक्षाय कुतीर्थिनाम् ॥ १ ॥

[1]येषां विकचारविन्दराज्या, ज्यायःक्रम कमलावलिं दधत्या ।

सदृशैरिति सङ्गतं प्रशस्यं, कथितं सन्तु शिवाय ते जिनेन्द्राः ॥२॥

[2]कषायतापाऽर्दितजन्तुनिर्वृतिं, करोति यो जैनमुखाम्बुदोद्गतः ।

स शुक्रमासोद्भववृष्टिसन्निभो, दधातु तुष्टिं मयि विस्तरो गिराम् ॥३॥

卐[3]श्वसितसुरभिगन्ध[4]लीढभृङ्गीकुरङ्गं,

मुखशशिनमजस्रं बिभ्रती या बिभर्ति ।

विकचकमलमुच्चैः साऽस्त्व[5]चिन्त्यप्रभावा,

सकलसुखविधात्री प्राणभाजां श्रुताङ्गी ॥ ४ ॥

---

१ वैतालियच्छन्दः ॥ २ वंशस्थम् ॥ 卐 ३ मालिनीछन्दः ॥ ताडपत्रीयपत्रके इयं स्तुतिः दृश्यते ॥ 4 °लुब्धा°-ऽऽलुप्त० ॥ 5 °स्त्य० ॥

## (८)

### (हरिणीवृत्तम्)

धनमुनिवराः श्राद्धाः सिद्धाः मनस्तनुसंवरात्,
प्रभवति महालब्धिव्यूहो गदार्त्तिविनाशकः ।
त्रिदशपतयो देव्यो नार्यो नमन्ति नरेश्वराः,
असुरविभवः श्रीमद्वीरं समाधिसमन्वितम् ॥ १ ॥

समवसरणे रत्नैः स्वर्णैः कृते रजतैर्मणि-
कनकरचिते स्थित्वा सिंहासने परमेष्ठिनः ।
नृपशुसुरवाक्-संवादिन्या गिरोपदिशन्ति ते,
पिहितसकलाक्षव्यापाराच्छिवं व्रतसंवरात् ॥ २ ॥

धरत समितिं गुप्ति मेयां त्रिभिः किल पञ्चभि-
स्त्यजत हि मनोभृङ्गं शृङ्गिभवन्तमहर्निशम् ।
विरसविषये पुष्पौपम्ये परीसहवाहिनि,
जयति जगदीशोक्तिर्मुक्तेर्निबन्धनमीरितम् (?) ॥ ३ ॥

करणसदनद्वारो वारं विमाननिवासदं,
भजत भविनोऽवश्यं वश्यं भवेश्च शिवश्रियः ।
चरमभगवद्भक्त्या सिद्धायिका वरदायिनी,
सृजति सुखशुद्धेभावं सुसंवरिणामिह ॥ ४ ॥

( ९ )

( वंशस्थम् )

[1]परिष्ठाऽष्टकर्मद्विषद्ध्वंसनेन, प्रदत्तं त्वदीयं महन्नामधेयम् ।

महावीर इत्यद्भुतं देवराज्ञा, कृताऽऽज्ञाप्रपञ्चेनदेवावलीभिः ॥१॥

जिनाली भवाली हताली नराली–नतारा नतारा समारा समारा ।

प्रमोदा प्रमोदा निदानानिदाना, विमाना विमाना प्रमाणा प्रमाणा ॥२॥

ततान्तः कृतान्तः कृतान्तः प्रशान्तः,

प्रकान्तं मितान्तं[2] नतान्तं महान्तम् ।

ददातु त्वजातु प्रमादः प्रमादः,

सुखं नः पुनानः समानां समानाम् ॥ ३ ॥

अधिष्ठायिका साधु सिद्धायिका वः, पुनीतात् स्फुरन्नूपुरद्वन्द्वपादा ।

स्वकीयप्रभुप्रष्ठसेवानुरक्ता, विरक्ता भवेभ्यः पतज्जन्मवद्भ्यः ॥४॥

( १० )

( द्रुतविलम्बितम् )

विभुमशिश्रियदद्भुतवीरता, गुणमनीदृशमाश्रयितुं हरिः ।

यमनिशं स खलु त्रिशलाङ्गजो, वितनुतां तनुतां दुरितव्रजे ॥१॥

जगति मे सुहितैकशरण्यता–भणितिमर्हति सन्ततिरार्हती ।

जयतु सा त्वरितं भविकव्रजं, शुभवती भवतीरमुपासिता ॥२॥

नयगमादिशिलोच्चयदुर्गमो, वहुविधार्थमहामणिमण्डितः ।

जिनवराऽऽगमसिन्धुपतिः स्फुरत्, समुदयो मुदयोदयदोऽस्तु नः ॥३॥

---

१ पू० उपाध्यायश्रीधर्मसागरगणिशिष्य पं. श्रीगुणसागरगणिभिर्विरचिता स्तुतिरियम् । 2 नितान्तम् ।

सुमहिमानमलं सुधियां हि वाक्, त्रिपथगा भजते यदनुग्रहात् ।
भवतु सा कुशलानि वितन्वती, मतिमहातिमहाय सरस्वती ॥४॥

( ११ )

( इन्द्रवज्रा )

*श्रीवर्द्धमानाप्तगणप्रशस्य–राद्धान्त ! [1]भक्त्यामरनाथपूज्य ! ।
सूरीश्वरानन्दगुरोर्गणेशं, मनोज्ञवाचः कुरुतामुदारः ॥ १ ॥

( १२ )

( वसन्ततिलका )

*श्रीवर्द्धमानजिनराजि कृतान्तभक्ते,
कल्याणमुख्यविजयोदयसारकीर्ते ।
सर्वानुभूतिरनिशं तनुतात् सुखानि,
सश्रीकहीरविजयाभिधसूरिसङ्घे× ॥ १ ॥



* इय स्तुतिः चतुर्शः उच्यते । 1 भक्ता० । × सङ्घ-
विजयः स्यात् ।

# षष्ठस्तरङ्गः ।

## ( १ )

## स्तुतिचतुर्विंशतिकादि ।

( अनुष्टुभ् )

आदिनाथो युगादौ यो, धर्मदेशनया जनान् ।
उद्दधार तमःपङ्कात्, स जिनः शरणं मम ॥ १ ॥
विजयानन्दनं नित्य-मजितं कर्मणाऽजितम् ।
कर्मणां विजयं कर्तुं, तं नमामि जिनेश्वरम् ॥ २ ॥
शम्भवं शान्तिदं सत्य-गामिनं मुक्तिस्वामिनम् ।
शिवप्राप्त्यै सदा स्तौमि, जितारिभूपनन्दनम् ॥ ३ ॥
अभिनन्दनमानन्दा-द्भवाब्धेः पारदं प्रभुम् ।
संवराय प्रमोक्षाय, स्तवीमि साम्जरं जिनम् ॥ ४ ॥
माङ्गलेयं जिनं नौमि, तीर्णसंसारसागरम् ।
जगच्चन्द्रं तमोनाशि—बोधिज्योतिःप्रकाशकम् ॥ ५ ॥
पद्मप्रभो जगत्पूज्यो, दुःखत्रयनिवारकः ।
समुद्धर्ता भवाम्भोधे—र्जिनो विजयतांतराम् ॥ ६ ॥
श्रीसुपार्श्वः सुरैः पूज्यो, भयसप्तनिवारकः ।
सप्तमः श्रीजिनः सोऽस्तु, गतिसप्तविनाशकः ॥ ७ ॥

जयतात् श्रीजगन्नाथः, स चन्द्रप्रभतीर्थकृत् ।
कृतं येन महत्तीर्थं, तारकं भववारिधेः ॥ ८ ॥

पुष्पदन्तं जिनं याचे, मुक्तिमार्गं सनातनम् ।
येन प्रकाशितो योऽस्ति, स दातुं क्षमते हि तम् ॥ ९ ॥

शीतलो हिमवत् शीतः, दग्धुं कर्मकृषि क्षमः ।
आराद्धः कर्मनाशाय, वासाय शिवसद्मनः ॥ १० ॥

श्रेयांसः श्रेयसे नित्यं, ध्येयो गेयो गुणाम्बुधिः ।
लाभाय गुणरत्नानां, भूयान्मे स जिनोऽद्भुतः ॥ ११ ॥

वासुपूज्यो जिनो मे स्यात्, शरणं मृत्युवारकः ।
मृत्युंजयो न मन्त्रोऽन्यः, यन्नामस्मरणाद्यतः ॥ १२ ॥

विमलं विमलं सेवे, विमलीकर्तुमात्मनः ।
विमलस्थानसम्प्राप्त्यै, साधनं स यतो महत् ॥ १३ ॥

अनन्तं कर्मणो भारं, अनन्तो हरति क्षणात् ।
जिनस्तं स्तौमि भक्त्याऽहं, सर्वदेवशिरोमणिम् ॥ १४ ॥

धर्मो धर्मोपदेशेन, धर्ममूचे चतुर्विधम् ।
सोऽयं स पातु जिनो मां द्राग्, भवदुःखाद्भयङ्करात् ॥१५॥

शान्तिः शान्तिकरो गर्भे, गतोऽपि यो जिनेश्वरः ।
द्रव्यभावमयी शान्ति, देयाच्चक्रधरस्स मे ॥ १६ ॥

चक्रभृत् कुन्थुनाथो यः, त्यक्त्वा षट्खण्डभारतम् ।
प्राज्यं साम्राज्यमात्मीयं, ललौ स जयताज्जिनः ॥ १७ ॥

भास्करोऽरप्रभुश्चक्री, वक्रकर्मतमोहरः ।
शक्रचक्रार्चिताङ्घ्र्यब्जो, जिनो जीयात् सदा स तु ॥१८॥
**मल्लि**नाथो महामल्लो, मोहमल्लविनिर्जयात् ।
मल्लीनां[1] मोहवल्लीं स, भेत्तुमालम्बनं भवेत् ॥ १९ ॥
अपूर्वः **सुव्रत**श्चन्द्रः, कूर्माङ्कोऽप्यकलङ्कितः ।
कुतर्कतमसाऽग्रस्तो-ऽक्षयो रक्षतु मां सदा ॥ २० ॥
यस्य पादाब्जभक्तानां, विविधानि सुखानि हि ।
ऐहिकाऽऽमुष्मिकानि स्युः, जीयात् स **नमि**राट् जिनः ॥ २१ ॥
जिनो चिन्ताहरो **नेमि**-श्चिन्तामणिरिवाऽऽत्मनः ।
भवभ्रान्तिहरो भूया-च्छाश्वतस्थानदानतः ॥ २२ ॥
आश्वसेनिं प्रभुं **पार्श्वं**, वामेयं पार्श्वसेवितम् ।
संस्तुवे सिद्धिलाभायो-द्धिम्नोऽहं भवसागरात् ॥ २३ ॥
शासनं येन दत्तं मे, बोधिबीजप्रदायकम् ।
स **वीरो** मम चित्तस्थो, बोभूयाद्धि भवे भवे ॥ २४ ॥
विहरन्ती **जिनानां** या, **विंशतिः** शंसतीह याम् ।
मुक्तिपूःसरणी सा मे, त्राणं भूयाद्भवे भवे ॥ २५ ॥
जिनानां **शतसप्तत्यो**-त्कृष्टया भवपाततः ।
अरक्ष्यन्त जना सा मां, रक्षताद्भवपाततः ॥ २६ ॥
**सिद्धक्षेत्र**मनन्तानां, सिद्धिस्थानं महोत्तमम् ।
जैनशासनशृङ्गारं हृद्धारं स्तौमि तन्मुदा ॥ २७ ॥

---

१ मत् लीनाम ॥

अर्बुदाचलतीर्थे श्री—ऋषभादिजिनेश्वराः ।
कुर्वन्तु मङ्गलं नित्यं, सिद्धाः मङ्गलमूर्तयः ॥ २८ ॥

अष्टापदे शिवपदे, तीर्थे प्रापाऽऽदिनायकः ।
सिद्धिं सदातनीं यत्र तत् पुनातु जगत्त्रयम् ॥ २९ ॥

नेमिनाथजिनाधीश—कल्याणत्रयपावनम् ।
रैवताद्रिवरं तीर्थं, जेजीयाज्जगतीतले ॥ ३० ॥

श्रेणीबद्धा जिनेशा मे, भूरिशो हर्षदायकाः ।
तीर्थे जेसलमेराख्ये, पावयन्तु मनो मम ॥ ३१ ॥

वरकाणास्थपार्श्वेस्सः, भवपाशविनाशकः ।
विनाश्य सर्वकर्माणि, ददातु शिवसद्म नः ॥ ३२ ॥

चैत्यं राणकपूरत्नं, शतशः ( सहस्र ) स्तम्भमण्डितम् ।
ऋषभादिर्जिनैर्दीप्रं, तीर्थं जयतु भूतले ॥ ३३ ॥

यादवीयजरानाशे, नेमिनाथप्रकाशितः ।
श्रीशङ्खेशःपार्श्वनाथो, देयाच्छाश्वतसम्पदम् ॥ ३४ ॥

स्वयम्भूपार्श्वनाथेन, भूषितं चैत्यमुन्नतम् ।
कापर्डीक्षेत्रमध्यस्थं, कल्याणं वितनोतु नः ॥ ३५ ॥

तारङ्गे गगनस्पर्द्धि, कुमारनृपकल्पितम् ।
अजिताऽलङ्कृतं चैत्यं, अजितं विदधातु माम् ॥ ३६ ॥

स्तम्भनःपार्श्वनाथो यो—ऽभयदेवविरोगकृत् ।
स्तम्भनग्रामवास्तव्यो, मेऽघं हन्तु जिनेश्वरः ॥ ३७ ॥

पार्श्वं पत्तनगं वन्दे, प्रभुं पञ्चासराऽऽह्वयम् ।
रमामाह्वयितुं मुक्ति, शीघ्रमात्मगृहाङ्गणे ॥ ३८ ॥

अद्भुतं तीर्थरूपं श्री–पार्श्वं नत्वा गुणालयम् ।
**चारूपे** चित्तहृद्देव–मानन्दं प्राप्नुवं नवम् ॥ ३९ ॥

**चारूपे** तीर्थरूपं तं, पार्श्वनाथं नमाम्यहम् ।
देवीकृतो येन नागो, मन्त्रस्य श्रावणेन हि ॥ ४० ॥

**शेरीसापार्श्वनाथो** यः, त्रयोविंशो जिनेश्वरः ।
त्रिविंशतिविकाराणां, हर्ता हृत्पद्मगोऽस्तु मे ॥ ४१ ॥

**भोयण्यां** नूतने तीर्थे, मल्लिनाथो जिनेश्वरः ।
कर्ममल्लविघाताय, मल्लतां विदधातु मे ॥ ४२ ॥

ग्रामे पानसराख्ये श्री–महावीरं भजाम्यहम् ।
प्रदत्तं शासनं येन, तस्मै मेऽस्तु नमो नमः ॥ ४३ ॥

**वामजे** शान्तिनाथस्या–द्भुतं बिम्बं नमाम्यहम् ।
गर्भस्थेनाऽपि येनाऽस्ति, कृता शान्तिर्जगत्तले ॥ ४४ ॥

सुमतेर्जिननाथस्य, चमत्कारविधायिनी ।
**मातरे** या स्थिता मूर्तिः, साऽस्तु कल्याणकारिणी ॥ ४५ ॥

सुधर्मस्वामिनः काले, मूर्तिर्याऽस्ति प्रतिष्ठिता ।
**भद्रेसरे** श्रीवीरस्य, सा कल्याणं करोतु मे ॥ ४६ ॥

देवं **झगडीया**धीशं, युगादीशं जिनेश्वरम् ।
भजामि भावतो नित्यं, रातु मुक्तिरमां मम ॥ ४७ ॥

**चम्पायां** वासुपूज्यस्य, निर्वाणमभवत्ततः ।
जातं तीर्थं महत्तेन, सेव्यं तद्भव्यजन्तुभिः ॥ ४८ ॥

अपापायां महावीरः, प्रापन्मुक्तिपुरं वरम् ।
पापानाम्नी ततो जाता, चित्रं सा तीर्थभूरभूत ॥ ४९ ॥

सम्मेतशिखरे सिद्धा जिनानां विंशतिर्यतः ।
महतोऽपि महत्तीर्थ—मतः पातु जगत्त्रयम् ॥ ५० ॥

पार्श्वनाथोऽन्तरिक्षाख्योऽन्तरिक्षे वर्तनात् श्रुतः ।
कृपालुः सर्वसाम्राज्यो, राजराजार्चितोऽस्तु मे ॥ ५१ ॥

माणिक्यस्वामिनाम्ना यः कुल्पाके वृषभप्रभुः ।
आदिधर्मप्रणेता स, मह्यं रातु जिनः शिवम् ॥ ५२ ॥

अजारापार्श्वनाथोऽसौ, सांयान्त्रिकभयापहः ।
भवाब्धेस्तारकः पुंसां, ध्रुवं मां तारयिष्यति ॥ ५३ ॥

दीवस्थो नवलक्षेति, ख्यातः पार्श्वजिनेश्वरः ।
नागोद्धारकदेवो यः, स उद्धरतु मां भवात् ॥ ५४ ॥

इलादुर्गस्थितः शान्ति-नाथोऽनाथसनाथकृत् ।
एतस्य तीर्थरूपत्वं, यश्चक्रे शरणं स मे ॥ ५५ ॥

सावलीपोशिनाभानुः, पार्श्वनाथो जिनेश्वरः ।
तीर्थकृन्मोहतिमिरं, ह्रियात् मे शरणैषिणः ॥ ५६ ॥

कावीतीर्थस्थितौ वन्दे, धर्मर्षभजिनेश्वरौ ।
जहतुर्यौ जगत्तापं, तो मे दत्तां शिवालयम् ॥ ५७ ॥

पार्श्वनेमिमहावीराः, जिनेन्द्रा भवपारदाः ।
पोशीनायां नगर्यां ते, कल्याणं वितरन्तु नः ॥ ५८ ॥

श्रीतीर्थं **लोद्रवा**नाम, प्रसिद्धं पार्श्वनाथतः ।
स्मरामि मानसे नित्य-ममृतस्थानसिद्धये ॥ ५९ ॥

**नन्दिपूःस्थं** महावीरं, साक्षादिव जिनेश्वरम् ।
दृष्टं मया पूर्वकाले-ऽधुना वन्दे हृदि स्थितम् ॥ ६० ॥

ग्रामे **बामणवाडे** च, महावीरं सदाऽऽश्रये ।
यस्मात् परं शिवं लब्ध्वा, सदानन्दो भवाम्यहम् ॥ ६१ ॥

**कम्बोइग्राम**मध्यस्थ–श्रीपार्श्वं प्रणमाम्यहम् ।
साद्यनन्तेन भङ्गेन, सिद्धात्मत्वोपलब्धये ॥ ६२ ॥

जन्मच्यवनदीक्षाभिः, केवलेन पवित्रिता ।
शान्तिकुन्थ्वरनाथानां, **हस्तिनापूः** सदा जयेत् ॥ ६३ ॥

**कुम्भोजतीर्थ**गान् देवान्, श्रीपार्श्वादिजिनेश्वरान् ।
गिरिस्थानेव वन्देऽहं, गन्तुं पारं भवोदधेः ॥ ६४ ॥

**थाणा**विवर्तिनं, नाथं, सुव्रतं व्रतदायकम् ।
भवान्ताय भजे नित्यं, श्रीपालेन सुपूजितम् ॥ ६५ ॥

श्री जिनो **नवलक्षे**ति, विख्यातो मरुभूषणम् ।
**पाल्यां** पार्श्वप्रभुर्जीयात्, भव्यकर्मनिकन्दनः ॥ ६६ ॥

**श्मश्रुवान्** श्रीमहावीरो, मरौ कल्पमहीरुहः ।
पूरको वाञ्छितार्थानां जीयान्मे चित्तहारकः ॥ ६७ ॥

**रक्तवर्णमहावीरो**, विद्यापू र्निकटस्थितः ।
कुर्यान्मे मुक्तिनैकट्यं, स एव शरणं वरम् ॥ ६८ ॥

उत्तरे गुर्जरे देशे, रातेजाख्यं वरं पुरम् ।
नेमिनाथजिनेनाल-ङ्कृतं भद्रं करोतु नः ॥ ६९ ॥

श्रीनेमेर्जन्मना पूतं, तीर्थं शौर्यपुरं महत् ।
वरं ददातु मे सद्यः, शौर्यं कर्मविघट्टने ॥ ७० ॥

अयोध्या यार्षभादीनां, जन्मादेः पावनीकृता ।
जाताऽस्माकं तीर्थभूता, हरतात्कर्मसञ्चयम् ॥ ७१ ॥

भीलडीयेति नाम्ना यः श्रीपार्श्वः सुप्रभावकः ।
नयतान्मुक्तिनैकट्यं, समर्थस्तारको विभुः ॥ ७२ ॥

लोटाणार्षभदेवो यो, दृष्टमात्रो हृदि स्थितः ।
हरत्वान्तरमालिन्यं, युगादौ धर्मदायकः ॥ ७३ ॥

दीयाणायां महावीरोऽ-द्भुतकान्तिधरः प्रभुः ।
अद्भुतानि स सौख्यानि, ददातु जिनराट् मम ॥ ७४ ॥

सिद्धार्थनन्दनो नाणा-मण्डनः श्रीवीरप्रभुः ।
प्राभवं वैभवं दद्यात्,: स्तुतः स सूरिपुङ्गवैः ॥ ७५ ॥

जीवत्स्वामीति यः ख्यात्या, महुवातीर्थकारकः ।
वरं पारकरं दद्यात् श्रीवीरः शासनाधिपः ॥ ७६ ॥

तालध्वजगिरौ सौम्य-मूर्तिः श्रीसुमतिप्रभुः ।
धर्मे मे सुमतिंदद्यात्, पञ्चमो धर्मनायकः ॥ ७७ ॥

श्रीघोघाबन्दरे पार्श्वं, नमामि नवखण्डकम् ।
नधर्मं तत्त्वरूपं त-मष्टमीगतिदायकम् ॥ ७८ ॥

कदम्बगिरितीर्थाय, प्रातर्नित्यं नमोऽस्तु मे ।
कोटीशः कोटिभव्यानां सिद्धिदात्रे शिवाप्तये ॥ ७९ ॥

श्रीसूर्यमण्डनं पार्श्वं, द्रङ्गे श्रीसूरते स्थितम् ।
भव्यानां बोधिदातारं, भक्तिभावान्नमाम्यहम् ॥ ८० ॥

छाणीग्रामस्थितं सेवे, शान्तिनाथं मनोहरम् ।
जगतः शान्तिकर्तारं, आत्मलब्धिप्रदायकम् ॥ ८१ ॥

लोढणं जिनपार्श्वेशं, दर्भावत्यां गतं नतम् ।
चतुष्षष्टिसुरेन्द्रैस्तं, संयमाय नमाम्यहम् ॥ ८२ ॥

अह्मदावादसुख्यात–नगरे योऽस्ति राजितः ।
मोरैयापार्श्वनाथं तं, संस्तुवे भक्तिभावतः ॥ ८३ ॥

ज्ञानमन्दिरमध्यस्थं, दादरस्य विभूषणम् ।
शीतलं कर्महन्तारं, देवं वन्दे निरन्तरम् ॥ ८४ ॥

पायधूनीतिनाम्ना यत्स्थानं येन विभूषितम्
गोडीपार्श्वजिनेशं तं, मोहमय्यां नमाम्यहम् ॥ ८५ ॥

भूलेश्वरे लालबागे, यो वीरो गुणसागरः ।
शासनस्याधिपं तं वै, त्रियोगेन भजाम्यहम् ॥ ८६ ॥

लुधियानाऽख्यपुर्यां यः, कलिकुण्डोपनामतः ।
चमत्कारकरं पार्श्वं. तं नमामि निरन्तरम् ॥ ८७ ॥

विजयाऽऽनन्दसूरीश–जन्मस्थानसमीपगम् ।
जीरा गतं भजे पार्श्वं, लब्धिदं मुक्तिदायिनम् ॥ ८८ ॥

सुथरीघृतकल्लोलं, पार्श्वं पापप्रणाशकम् ।
उपसर्गहरं नित्यं, स्तुवेऽहं भक्तिभावतः ॥ ८९ ॥

आधिहमृषभं वन्दे, युगादौ धर्मदेशकम् ।
मनश्चिन्तितदातारं, मारुदेवं जखौ स्थितम् ॥ ९० ॥

वेदनेत्रजिनान् वन्दे, नलीयाऽष्टापदाऽऽलये ।
भवभ्रान्तिहरान्नाथाना-ऽऽत्मशान्तिकरान् सदा ॥ ९१ ॥

कोठारास्थं भजे शान्ति-नाथमिन्द्रैर्नमस्कृतम् ।
संत्यक्तचक्रवर्तित्वं, सर्वरोगहरं प्रभुम् ॥ ९२ ॥

पार्श्वजीरावलं तेरा-ग्रामेस्थितं मनोहरम् ।
श्यामलं सुखदं नित्यं, त्रिधा सेवे सुभक्तितः ॥ ९३ ॥

जिनानां च्यवनं जन्म-दीक्षाकेवलमुक्तयः ।
यत्र स्युः तत्महत्तीर्थं, भजध्वं भव्यजन्तवः ! ॥ ९४ ॥

अतीताऽनागतान् सर्वान्, वर्तमानान् जिनेश्वरान् ।
प्रपद्ये शरणं भावात्, पारं गन्तुं भवोदधेः ॥ ९५ ॥

अद्भुतं ज्ञानमीशाना, तीर्थकृन्नामभोगिनाम् ।
तारकं शरणं मेऽस्तु, श्रुतसागरसञ्ज्ञतम् ॥ ९६ ॥

तीर्थकृत्पादसेवायां, या रक्ता सुरदेवता ।
सर्वविघ्नविनाशाय, भवेत् सा भक्तिशालिनाम् ॥ ९७ ॥

---

१ प्रान्तपद्यत्रयेणसाकं भण्यते तदा श्रीतीर्थङ्करतीर्था-
दीनां स्तुतयो भवन्ति ॥

## प्रशस्तिः

सुधर्मस्वामिनः पट्टे, द्वासप्ततितमे ह्यभूत् ।
विजयाऽऽनन्दसूरीशः, तपोगच्छप्रभावकः ॥ १ ॥

ढुण्ढकानां सहस्राणि, कृत्वा पञ्चनदे सुधीः ।
मूर्तिपूजा विधायीनि, समुद्दध्रे गुरूत्तमः ॥ २ ॥

हिंसकानां नरेन्द्राणां, दयाधर्मोपदेशकः ।
रेजे कमलसूरीशः तत्पट्टे मम सद्गुरुः ॥ ३ ॥

तस्य पट्टधरेणैव, रचिता लब्धिसूरीणा ।
तीर्थङ्करसुतीर्थानां, जयन्तु स्तुतयः सदा ॥ ४ ॥

×नयनेक्षोणीःयोमाक्षि—वत्सरे वैक्रमे शुभे ।
उज्ज्वले श्रावणे मासे, तृतीया—दिवसे शुभे ॥ ५ ॥

रचितेयं स्तम्भपूर्यां, स्वल्पशक्त्यापि भावतः ।
न पुष्पाणि दलं पौष्पं, जिनपादे समर्पितम् ॥ ६ ॥



---

× वि. सं २०१२नी पोतानी नित्यनोंधपोथीमांथी उद्धरित ॥

## सप्तमस्तरङ्गः ।

### श्रीसामान्यजिनस्तुतयः

(१)

चैत्यद्रुमः कुसुमसन्ततिरासनध्वनि-
        च्छत्राणि भावलयदुन्दुभिचामराणि च ।
राजन्ति यस्य रचितानि सदा सुपर्वभिः,
        श्रीदेवदेवमुदितोदयमाऽऽनमामि तम् ॥ १ ॥
चत्वार आद्यदिनतः प्रभवन्ति यस्मि-
        न्नेकादशाऽथ विलयेऽतिशयाः सुभान्ति ।
एकोनविंशतिरमी अमरैः कृताश्च,
        श्रीसर्ववेदिनिवहं तमहं स्तवीमि ॥ २ ॥
भूयो भवभ्रमणसम्भवतापखिन्ना,
        यस्याश्रिताः सपदि निर्वृतिशर्मभाजः ।
हेतुःश्रियामिव सुरद्रुमकाननं श्री-
        जैनेन्द्रशासनमिदं शिवदं श्रयेऽहम् ॥ ३ ॥
जागर्ति नित्यमिह या कलिकालरात्रौ,
        सिंहेऽधिरुह्य जिनधर्मजुषां सुखाय ।

---

१ वसन्ततिलका ॥ २ घातिकर्मनाशे ॥

विघ्नाऽपहारमभितः सृजती श्रिताना—
मम्बा शिवाय भवताद्भविनामिवाऽम्बा ॥ ४ ॥

( २ )

( उपजातिः )

*सर्वे द्युलोकागमजन्मदीक्षा—
ज्ञानाऽपवर्गाऽऽप्तिदिना जिनानाम् ।
महोत्सवोद्योतमया मयाऽमी,
स्मृताः समाधिं ददतां च बोधिम् ॥ १ ॥

[1]च्यवनजननदीक्षाकेवलज्ञानमोक्षा—
गमसमयविशेषेपूत्सवाद्येपु येपु ।
क्षितिवलयमपास्तस्वर्गशोभं बभास्ति,
प्रददतु मुदमाऽऽप्ताऽस्तेऽत्र कालत्रयेऽपि ॥ २ ॥

[2]उत्सर्पिण्यवसर्पिणीपु भरतेप्वैरावतेप्वर्हतां,
सर्वेपामपि भूतभाविभवता कल्याणकेपु क्रमात् ।
मासान् भानि तिर्थांश्च शाश्वततया तान्येव विज्ञा जगु—
र्यस्मात्तज्जिनभापितं प्रवचनं भक्त्या नमामोऽन्वहम् ॥ ३ ॥

[3]ये श्रीतीर्थाधिपानां समसमयभुवां विंशतेर्वा दशानां,
तावद्रूपैरुपेता इह महिमभरं पञ्चकल्याणकेपु ।

---

* पूज्य आचार्य श्रीसोमसुन्दरसूरीश्वराणां कृतिरियम् ॥
१ मालिनी ॥ २ शार्दूलविक्रीडितम् ॥ ३ स्रग्धरा ॥

अर्हद्भक्तिप्रमोदात्तृणतुलितदिवः कुर्वते सर्वकालं,
ते सर्वेऽपीन्द्रमुख्या विदधतु विबुधाः सङ्घलोकाय भद्रम् ॥४॥

( ३ )

( शार्दूलविक्रीडितवृत्तम् )

एगे जे य रविंदचंदभमरच्छाया परे सामला,
अन्ने निम्मलहेमवण्णतणुणो हंतूण कम्मावलिं ।
अव्वावाहमणंतमक्खयमहो सोमं सिवं सासयं,
संपत्ता परमं पयं जिणवरा भावेण तेसिं नमो ॥ १ ॥

गब्भाहाणदिणाइपंचसु महाकल्लाणएसुं सया,
जेसिं देवविमाणएहि सहसा इंतेहि सव्वादिसि ।
संरुद्धे गयणंगणे जगमिणं सव्वत्थ सग्गोवमं,
संजायं सुगइं गयाणमणिसं तेसिं जिणाणं नमो ॥ २ ॥

मिच्छत्तप्पबलंधयारहरणे जं चंडमाचंडयं,
जं संसारसमुद्दपारगमणे जीवाण जाणोवमं ।
जं मुत्तुं भुवणे वि निव्वुइकरं जीवाण अन्नं न किं,
भावेणं भवनासणं नमह तं सव्वण्णुणो सासणं ॥ ३ ॥

धारिता मुसलासिचक्कपमुहं नाणाउहाणं गणं,
आरूढा अणुरूववाहणगणे गोअस्ससिहाइए ।
विज्जादेविसमूहओहपरिओ पण्णत्तिपामुक्खओ,
जो सीहो जिणसंघकज्जकरणे मा होउ ढिल्लायरो (?) ॥४॥

(४)

समहिय समहिय समहिय, समहिय समहिय समुज्झियं अरुह ।
मयण य मयण य मयण य, मयण य मयण य गयप्पणए ॥१॥

जणयं जणयं जणयं जणयं, जणयं सुहाण जिणविसरं ।
समहं समहं समहं समहं, समहं समाणंस वंदे ॥ २ ॥

समयं समयं समयं समयं, समयं च नमइ वियरंतं ।
अमयं अमयं अमयं अमयं, अमयं कुणंतमिह ॥ ३ ॥

सत्ता सत्ता सत्ता, सत्ता सत्ताण ताण दाणंमि ।
सुकया सुकया सुकया, सुकया सुकयासणा वाणी ॥ ४ ॥

(५)

(द्रुतविलम्बितम्)

असमरं समरञ्जनमञ्जन–च्छिदमिनं दमिनं शमिनं जिनम् ।
अविरतं विरतं विरतं रतं, भविहते विहतेऽर्हतमर्चत ॥ १ ॥

अममता मम तापघना घनाः, सकरलापकलापर ।
रविपदो विपदो विपदो जिना, विपनयन्तु नयन्तु नयन्तु माम् ॥२॥

विलसदक्षरदक्षरजः क्षितौ, कुमतक्षत तक्षणदक्षतौ ।
श्रुत ! सदा नवदानवमानवस्तुत ! नतीनवतीननवर्जित ! ॥३॥

स्फुटितभासुरभा सुरसुन्दरी–व्रजनता जनतापिहिता हिता ।
सकमलं कमलं भुवि बिभ्रती, स्यतु तमांसि सरस्वती ॥४॥

( ६ )

( अनुष्टुभ् )

कामितं कामितं दद्यात्–परमेष्ठी परेष्टदः ।
सकलः सकलश्रीणां, पारगः पारगत्वरः ॥ १ ॥

स्वयम्भुवो भुवो ज्ञान–श्रीणां संवरसंवराः ।
मानसन्मानसंयुक्त सञ्चयं रचयन्तु नः ॥ २ ॥

गुणाधीशैर्गणाधीशै–र्विहितं विहितं वदत् ।
श्रुतं श्रुतं श्रियं दद्यात्-सदक्षरं सदक्षरम् ॥ ३ ॥

शारदा शारदाभाङ्गी, श्रीहर्षविनयश्रियम् ।
नित्यं नित्यं करोतूच्चं, भवे भवे भवोद्भवम् ॥ ४ ॥

( ७ )

( द्रुतविलम्बितम् )

सदयतादयतात्मपथप्रका–शकवचः कवचप्रणताङ्गिनाम् ।
तव पदाब्जयुगं सुगुणावली–वनरसं नरसंश्रितमाश्रये ॥१॥

जिनवरा नवरागहतोदराः, कुनयदुर्मददुर्मदने हराः ।
सरसदर्शनदर्शनिनः श्रुत-स्वरचयं रचयन्तु हृदङ्गिनाम् ॥२॥

गणधरैर्विहितं विहितं श्रितं, रविमिताङ्गमिताङ्गभृतां मते ।
दिशतु संसृतिसंसृतिपारभृत्, सकलया कलया कलितैरलम् ॥३॥

श्रीसुरी दिशतु कामितानि मे, तानि मेरुरिव धीरदर्शना ।
दर्शनाद्भविकभावुकाकला, शालहर्षविनयत्र ! भूजया ॥४॥

( हरिणीप्लुतछन्दः )

येषां कक्षा न्यक्षाऽक्षूण्णाकक्षीकाराक्षोदीयः—
पक्षाक्षेपक्षुण्णारोहांहः सन्दोहापोहोहा ।
वन्द्याऽनिंद्याऽवद्याऽतोद्या मानज्ञानं विज्ञानं,
नाभेयाद्यान् देवार्यान्त्यान् सर्वान् सार्वास्तान् स्तोष्ये ॥१॥
या संसारे सारासारं मत्वाऽऽदेयं सहेयं,
त्यक्त्वा सङ्गासक्तिं युक्त्याराध्याऽबाध्यं चारित्रम् ।
कर्मोन्मूल्यादायज्ञानं नित्यानन्ताभं लेभे,
तीर्थेशाली सम्पल्लीलोल्लासायासौ भूयान्मे ॥ २ ॥
सिद्धैश्वर्यं कुर्यात्कस्यावश्यं न श्रीसिद्धान्तः,
सत्याप्यार्थः सार्वैः सूत्र्यासूत्रः सूत्रात्तच्छिष्यैः ।
कैवल्यश्रीलीलावासः सृष्टाभीष्टानुष्ठेयः,
शिष्टाचारस्पष्टीकारे भास्वान् शश्वद्विश्वाऽर्च्यः ॥ ३ ॥
सार्वोपास्या यक्षा यक्षिण्यः श्रीरम्बा चक्रेशा,
ब्राह्मी पद्माऽ जिह्मब्रह्माद्वैताश्चान्याधिष्ठान्यः ।

* पूज्य पण्डितत्रिनयहंसगणिवराणां कृतिरियम् ॥
१ प्रतिज्ञा ॥ २ संपूर्णा चासौ निर्दोषा च ॥ ३ अङ्गीकारस्य महत्तरः ॥ ४ पक्षः सर्वविरतिरूपः ॥ ५ पुनरनुत्पत्तिमान् यः पापसमूहस्तस्य अपोहो निषेधस्तस्य ऊहो यस्याः सा ॥ अस्ति इति क्रियाध्याहारः ॥ ६ दोषरहिता ॥ ७ श्रीमहावीर ॥ ८ सार्व उपास्यः सेव्यो येषां यासां वा ते ता वा ॥

विघ्नारिष्टं घ्नन्तु श्लोकालोकं मेलं देयासु-
र्योग्यारोग्यं भोग्याभोगं रङ्गद्भाग्यं सौभाग्यम् ॥ ४ ॥

(९)

(उपजातिः)

देवेन्द्रवन्द्यो जिनसर्वविद्या–नन्दं विधत्ते त्वयि वीक्षिते यः ।
सदा समासादितधर्मकीर्तिः, शिवं श्रयेताशिवशासनोऽसौ ॥१॥
ते सर्वदेवेन्द्रगुरोः सविद्या, नन्दन्ति नूनं सुमनःसभासु ।
ये दर्शितार्थश्रुतधर्मकीर्तिन्? नमन्ति देवान् परमात्ममूर्तिन् ॥२॥
यद्भक्तितः श्रीरपि सार्वविद्या–नन्दस्थितं पुंसि सधर्मकीर्तौ ।
ससंपदेवेन्द्रवति प्रकामं, तस्मै नमो जैनवरागमाय ॥ ३ ॥
तेषां मुदेऽवेन्द्रसधर्मकीर्ते, वलक्षमूर्ते श्रुतदेवते त्वम् ।
ये ते गुणानस्तविसार्यविद्या–नान्दोलयन्ति स्तवनेन नित्यम् ॥४॥

---

## अष्टमस्तरङ्गः

### श्रीशत्रुञ्जयादितीर्थस्तुतयः

### १ श्रीशत्रुञ्जयस्तुतयः

(द्रुतविलम्बितम्)

विमलशैलविशालमतङ्गज–प्रवरमूर्ध्निपुरन्दरसन्निभः ।
[1]विजयते प्रथमो जिनपुङ्गवो, नरसुरासुरनाथनमस्कृतः ॥१॥

1 विजयताम् ॥

दुर्गाधाऽनोरपारङ्गततिमिकलितं हेतुमुक्ता–फलाढ्यं,
चञ्चतद्दृष्टान्तरत्नं नयविततिजलं भङ्गरङ्गत्तरङ्गम् ।
नानायुक्तिप्रपञ्चप्रचुरजलचरं सूक्तिसद्युक्तियुक्तं,
सेवध्वं भव्यलोकाः ! श्रुतसुजलनिधिं सादरं मुक्तिभूत्यै ॥३॥

कुष्माण्डी कमलेक्षणा भगवती चक्रेश्वरी वाऽच्युता,
वैरोट्या विलसल्ललाटतिलकाः सब्रह्मशान्तिग्रहाः ।
अन्येऽपि प्रगटप्रभावपटवः सर्वेपि यक्षादयो,
वैयावृत्तिकराः सदैव विपुलं सौख्यं प्रयच्छन्तु नः ॥ ४ ॥

## श्रीनन्दीश्वरद्वीपस्तुतिः

दीवंमि नंदीसरनामगंमि, बावन्नपासायमनोहरंमि ।
अपावलेवे रिसहाइदेवे, वंदामि वंदारुसुरिंद–सेवे ॥ १ ॥

नमन्तदेवासुरकिन्नराणां, संसारकंतारखयंकराणां ।
जिणिंदचंदाण पयारविंदे, तिलोअकल्लाणकरेऽभिवन्दे ॥ २ ॥

पणासियं मोहमहंधयारं पयासियं जेण तिलोअसारं ।
जिणागमं सूरसमप्पभेअं, नमामि निम्माविअसव्वसेअं ॥ ३ ॥

तित्थंकराणं कयपायसेवा, सव्वे सया सासणभत्तदेवा ।
धम्मं कुणंतस्स जए महग्घं, सिग्घंपि संघस्स हरंतु विग्घं ॥४॥

---

१ स्रग्धरा ॥ २ शार्दूलविक्रीडितम् ॥

## तारङ्गदुर्गमण्डनश्रीअजितजिनस्तुतिः

(अनुष्टुभ्)

*तारङ्गेत्युच्चचैत्यं श्री–अजितस्य विनिर्मितम् ।
राज्ञा कुमारपालेन, तीर्थरूपं जयत्विदम् ॥ १ ॥
आविश्चक्रुः जिनाः सर्वे, शासनं तत्त्वभासनम् ।
तेभ्यो देवाधिदेवेभ्यो, नमो मेऽस्तु निरन्तरम् ॥ २ ॥
वाण्यैव जिनराजस्य, भवेत् तत्त्वविचारणा ।
तत्त्वज्ञानाय भावेन, तां नमामि निरन्तरम् ॥ ३ ॥
तीर्थसेवाकरी देवी, या काचिद्‌भवति ध्रुवम् ।
भिनत्तु विघ्नसङ्घातं, सम्यक्त्वधारिणी मम ॥ ४ ॥

---

## नवमस्तरङ्गः

### श्रीसीमन्धरादिजिनस्तुतयः

### १ श्रीसीमन्धरजिनस्तुति

(दण्डकवृत्तम्)

स्फुरदभिनवभावसम्भूतभक्तिप्रभूतामरेन्द्राऽऽवलि-
स्मेरमाणिक्यकोटीररत्नप्रभाजालविस्मेरताङ्-

* जैनरत्न व्याख्यानवाचस्पति कविकुलकिरीट पूज्य आचार्य भगवन्तश्रीमद्विजयलब्धिसूरीश्वरगुरुदेवाणां कृतिरियम् ॥ ई. स. १९५६ नी पोतानी नित्यनोंधपोथीमांथी उद्धरित ॥

*इषुमितमुनिकोट्या संयुतः पुण्डरीकः,
प्रथमजिनगणेशो यत्र मुक्तिं प्रपन्नः ।
सकलजिनवरा यं तीर्थराजं स्तुवन्ति,
स भवतु मम नित्यं श्रेयसे पुण्डराद्रिः[1] ॥२॥

×सिद्धाचले मुनिगणा[2] अपुनर्भवत्वं, प्राप्ताःपदं जननमृत्युविनाशि यत्र
जैनागमेषु विदितोऽस्ति महाप्रभावः, तस्यैव तीर्थनृपतेः काथतो
जिनेन्द्रैः ॥ ३ ॥

शत्रुञ्जयं प्रणमतां वरदानदक्षा, चक्रेश्वरीकवडगोमुखयक्षमुख्याः ।
सर्वार्थसिद्धिकरणोदयहर्षयुक्ता, कुर्वन्तु सङ्घकुशलं जिनधर्मरक्ताः॥४॥

(२)

(द्रुतविलम्बितम्)

विमलशैलविशालविभूषणं, प्रथमतीर्थपतिं गतदूषणम् ।
प्रणत पञ्चजनाऽमरनायका, निखिलविघ्नविनाशविनायकाः ॥१॥

जिनवरा गुणवृन्दकलालया—ऽप्रतिमतां दधतः कमलालयः ।
विदधतो दुरितव्रजनाशनं, नरकदुष्टगतिव्रजनाशनम् ॥ २ ॥

जगति भागवती वरभारती, जनयति श्रुतियामलभारती ।
जनशुभाशुभभेदविधायिका, सुखकरी न भवेद्बहुधायिका ॥३॥

जनयतादिह गुह्यकपर्दिकः, कृतपराङ्मुखकान्तिकपर्दिकः ।
सकलसङ्घविपत्तिकदम्बक क्षयकरः सरसीजसदम्बकः ॥ ४ ॥

---

*मालिनी ॥ 1 पुण्डरीकः ॥ ×वसन्ततिलका ॥ 2 जिनवरा ॥

( ३ )

( तोटकम् )

विमलाचलभूषणमादिजिनं, जिननूतविशुद्धगुणप्रकरम् ।
करणं महसां विनम्याम्यभवं, भवनं यशसां तमसंहरणम् ॥१॥
मलकर्ममनोभवतापहरं, हरतात्प्रणिपातकृतां विपदः ।
पदकोमलताजितसत्कमलं, मलदुःखहरं भगवद्गिसरम् ॥ २ ॥
सरसं वचनं भुवि भागवतं, बत ये श्रुतिगोचरमादधति ।
दधदङ्गभृतां प्रबलं विभवं, भवदुच्चतमोहतये सततम् (?)॥३॥
ततकान्तिधरो विदधाति महं, महनीयवपुर्लतिको जगति ।
गतिभिश्च जयन्मदिनं द्विरदं, रदनाढ्यमुखः सुरगोमुखकः ॥४॥

## १ श्री अष्टापदतीर्थस्तुतिः

( शार्दूलविक्रीडितम् )

नानावर्णनिजप्रमाणकलिता रत्नौघसन्निर्मिता-
नाभेयादिजिनेन्द्रवीरचरमास्तीर्थाधिपाश्चक्रिणा ।
यत्र श्रीभरताधिपेन विहिता देवेन्द्रवन्द्याः सदा,
स श्रीमान्नगनायको वितनुतां अष्टाद्रिपादः शिवम् ॥ १ ॥
मिथ्यात्वध्वंसदक्षान् भवभयहरणान् नष्टनिःशेषदोषान्,
संसाराम्भोधिपोतान् सुरपति विनुतान् केवलज्ञानयुक्तान् ।
मायामोहप्रमुक्तान् (प्रति)हतमदनान् मोदिताशेषलोकान्,
लोकालोकप्रदीपान् परमपदगतान्नौमि सर्वान् जिनेन्द्रान् ॥ २ ॥

१ स्रग्धरा ॥

दुर्गांधाऽनोरपारङ्गततिमिकलितं हेतुमुक्ता—फलाढ्यं,
चञ्चतदृष्टान्तरत्नं नयविततिजलं भङ्गरङ्गत्तरङ्गम् ।

नानायुक्तिप्रपञ्चप्रचुरजलचरं सू क्तिसद्युक्तियुक्तं,
सेवध्वं भव्यलोकाः ! श्रुतसुजलनिधिं सादरं मुक्तिभूत्यै ॥३॥

कुंष्माण्डी कमलेक्षणा भगवती चक्रेश्वरी वाऽच्युता,
वैरोट्या विलसल्ललाटतिलकाः सब्रह्मशान्तिग्रहाः ।

अन्येऽपि प्रगटप्रभावपटवः सर्वेपि यक्षादयो,
वैयावृत्तिकराः सदैव विपुलं सौख्यं प्रयच्छन्तु नः ॥ ४ ॥

## श्रीनन्दीश्वरद्वीपस्तुतिः

दीवंमि नंदीसरनामगंमि, बावन्नपासायमनोहरंमि ।
अपावलेवे रिसहाइदेवे, वंदामि वंदारुसुरिंद—सेवे ॥ १ ॥

नमन्तदेवासुरकिन्नराणां, संसारकंतारखयंकराणां ।
जिणिंदचंदाण पयारविंदे, तिलोअकल्लाणकरेऽभिवन्दे ॥ २ ॥

पणासियं मोहमहंधयारं पयासियं जेण तिलोअसारं ।
जिणागमं सूरसमप्पभेअं, नमामि निम्माविअसव्वसेअं ॥ ३ ॥

तित्थंकराणं कयपायसेवा, सव्वे सया सासणभत्तदेवा ।
धम्मं कुणंतस्स जए महग्घं, सिग्घंपि संघस्स हरंतु विग्घं ॥४॥

---

१ स्रग्धरा ॥ २ शार्दूलविक्रीडितम् ॥

## तारङ्गदुर्गमण्डनश्रीअजितजिनस्तुतिः

(अनुष्टुभ्)

*तारङ्गेत्युच्चचैत्यं श्री–अजितस्य विनिर्मितम् ।
राज्ञा कुमारपालेन, तीर्थरूपं जयत्विदम् ॥ १ ॥
आविश्चक्रुः जिनाः सर्वे, शासनं तत्त्वभासनम् ।
तेभ्यो देवाधिदेवेभ्यो, नमो मेऽस्तु निरन्तरम् ॥ २ ॥
वाण्यैव जिनराजस्य, भवेत् तत्त्वविचारणा ।
तत्त्वज्ञानाय भावेन, तां नमामि निरन्तरम् ॥ ३ ॥
तीर्थसेवाकरी देवी, या काचिद्भवति ध्रुवम् ।
भिनत्तु विघ्नसङ्घातं, सम्यक्त्वधारिणी मम ॥ ४ ॥

---

# नवमस्तरङ्गः

## श्रीसीमन्धरादिजिनस्तुतयः

### १ श्रीसीमन्धरजिनस्तुति

(दण्डकवृत्तम्)

स्फुरदभिनवभावसम्भूतभक्तिप्रभूतामरेन्द्राऽऽविल-
स्मेरमाणिक्यकोटीररत्नप्रभाजालविस्मेरताङ्-

---

* जैनरत्न व्याख्यानवाचस्पति कविकुलकिरीट पूज्य आचार्य भगवन्तश्रीमद्विजयलब्धिसूरीश्वरगुरुदेवाणां कृतिरियम् ॥ ई. स. १९५६ नी पोतानी नित्यनोंधपोथीमांथी उद्धरित ॥

ध्रिकमलयुगरेणुसौरभ्यलुभ्यमद्वारण्यसम्भ्रान्त-
भव्याङ्गिरङ्गद् द्विरेफावलीमण्डलीमण्डलाऽलङ्कृतम् ।

नरसुरशिवशर्मलक्ष्मीलसत्केलिगेहायमानं
प्रमोदास्पदीभूतविश्वत्रयीराजहंसीभिरासेवितं,

विततसुखसमाधि स्तुवे देवदेवं प्रभोः स्वामि
सीमन्धरस्य प्रभाते प्रभाते पदाब्जद्वयं भक्तितः ॥ १ ॥

नवजलदगम्भीरविस्फुर्जदूर्जस्विसद्देशनारम्भ-
संरम्भविद्राविता प्रौढकन्दर्पदोर्दण्डदर्पोर्जिता,

असमशमसुधाम्बुधेर्लोककल्लोलमालाविलासप्रसर्प-
त्प्रभावा (वो ?)द्यता नाशितक्रोधसम्बन्धसर्पोत्करा: ।

दलिततिमिरराजीव जीवेशशोभानिरासक्षमाक्षा-
मधामैकधामाभिरामाननश्रीविलासाश्रिताः,

त्रिभुवनजनवन्द्यपादारविन्दद्वयास्ते जिना मे दिशन्तु
श्रियं शाश्वतीं सिद्धिसौधाधिसंवासिनीं सर्वदा ॥ २ ॥

कुमतकुलमदोद्धतानेकपानेककुम्भस्थलाघातस-
ञ्जातसन्मौक्तिकश्रेणिसंन्यस्तहस्ताग्रपञ्चाननं,

भवभवदुरं[1]दुःखदावानलज्वालितानन्तसत्त्वद्रुमौघो-
ल्लसत्पल्लवोल्लासलीलानवाम्भोधरालीनिभम् ।

---

१ °दुर०-दातृ ॥

सुनयनयगभीरमानङ्गरङ्गत्तरङ्गावलीसारविस्ता-
रबह्वर्थसद्रत्नराजीविभापूर्णदिग्मण्डलं,
जिनवरवचनं स्तुवे निस्तुषं सद्गुणेशैः कृतं बुद्धिमद्भि-
र्धृतं भूरि सूरीश्वरैरीतिंयुक्तिप्रपञ्चाश्रयम् ॥ ३ ॥

विकसितकरपङ्कजामोदलुब्धालिमालारवपूरित-
व्योमविस्तारसारा मुखाम्भोजरोचिर्जितेन्दुप्रभा,
शशशशशिकरौघकर्पूरपूरोल्लसत्क्षीरनीरे
शऽऽरपिण्डाभदेहद्युतिद्योतितादीशादीसाऽस्तु नः श्रिये ।
विदलितदुरितप्रताना सदा राजहंसाधिरूढा क्वण-
क्वाणवीणाकरा किङ्किणीजालसन्मेखलाभासिता,
विशदतरसुहारयष्टीष्टहृत्कण्ठपीठी रणन्नूपुराङ्घ्रिद्व-
या श्रीमती श्वेतवासाश्चिता भारतीदेवता ॥ ४ ॥

(२)

(शार्दूलविक्रीडितम्)

जो रज्जं परिहत्तु सुव्वयनमीतित्थेसराणांतरे,
दिक्खं गिण्हिय पत्तकेवलमहे बोहेइ भव्वे जणे ।
वंदे पुव्वविदेहवासवसुहासिंगारहारोवमं,
तं सीमंधरसामियं जिनवरं कल्लाणकप्पद्दुमं ॥ १ ॥

जुत्तं सट्ठि-सयं विदेहपणगे ऐरावहे भारहे,
पत्तेयं पुण पंच सत्तरिसयं एवं अहेसीपरा ।

१ °रीति०-क्षरत् ॥

इक्किकंमि विदेह संपइ पुणो चत्तारि चत्तारि जो,
ते सव्वे अईणागए जिनवरे बद्धंजली वंदिमो ॥ २ ॥
जो गंभीरभवंधकूवकुहरुत्तारे करालंबणं,
जो नीसेससमीहियत्थघडणो कप्पद्दुमो पाणिणं ।
मिच्छत्ताइमहंधयारलहरीसंहारसरुग्गमं,
तं दुद्दंतकुवाइदप्पदलणं वंदे जिणिंदागमं ॥ ३ ॥
जा सीमंधरसामिपायकमले सिंगारभिंगी सया,
खुद्दोवद्दवविद्दवंमि निउणा सव्वस्स संघस्स जा ।
जा अट्ठारसबाहुदंडकलिया सिंहासणे सोहए,
सा कल्लाणपरंपरा दिसउ मे पच्चंगुलीदेवया ॥ ४ ॥

### १ श्रीवीसविहरमानजिनस्तुतिः
(शार्दूलविक्रीडितम्)

वंदे सीमंधरं जुगंधरजिणं बाहुं सुबाहुं तहा,
सज्जायं रिसहाणणंतविरियसूरप्पहं ईसरं ।
वीरं वज्जधराइवीरियविसालं चदबाहुं सयं,
नेमिं देवजसं भुअंगममहाभद्दं च चंदाणणं ॥ १ ॥
जंबूदीवमहाविदेहतिलया चत्तारि तित्थंकरा,
अन्ने धाइयखंडमंडणजिणा अट्ठेव जे संथुया ।
तत्तो अट्ठयपुक्करद्धपहुणो वीसं जिणिंदा इमे,
एवं जे विहरंति संपइ सुहं ते दितु अन्नेव मो ॥ २ ॥
मिच्छत्तं पणकद्दमंपि विजए सव्वत्थ सो सत्तया,
सव्वंभोरुहकाणणं तमहरालोअंमि बोहंतया ।

तासं पायकुतित्थभूयनिवहं छायं तया कुग्गहे,
ते निच्चं सियवायवासरमणीपाया पसीयंतु मे ॥ ३ ॥
जे संघस्स चउविहस्स विजये साहज्जकज्जे रया,
ये सम्मत्तसुनिच्चला कलिमलपक्खालणप्पच्चला ।
वेयावच्चकरा सुरा जिणमए कम्मं कुणंताण ते,
अम्हाणं दुरियं हरंतु तुरीयं साहंतु जं चितियं ॥ ४ ॥

## १ श्रीशाश्वताऽशाश्वतजिनस्तुतिः

+ (स्रग्धरा)

यान्यूर्ध्वं मर्त्यलोके भवनपतिगतौ सन्ति चैत्यास्पदानि,
नित्यानित्यानि तेषु प्रतिकृतिनिवहं तीर्थनाथेश्वराणाम् ।
देवेन्द्राणां समूहैः नरगणवृषभैः पूजितं संस्तुतं वा,
भक्त्या नित्यं प्रणौमि त्रिविधविधियुतो भावतो मस्तकेन ॥१॥
पूर्वं येऽनन्तकाले त्रिदशपतिनता तीर्थनाथा व्यतीता,
विद्यन्ते ये च लोके समवसृतिगता प्रातिहार्यैः समेताः ।
तीर्थानां ये च नाथा अमरणजनना भाविकाले भवेयुः,
वन्दे तेषां गुणौघान्नमनभरयुतो न्यस्तभूमस्तकोऽहम् ॥ २ ॥
तीताद्धायां यदासीज्जिनमुनिरुचितं विद्यते साम्प्रतं यत्,
यद्भाव्यं यच्च भावि प्रवचनरचना-प्रेक्षया नित्यमर्थे ।
अङ्गानङ्गप्रविष्टं भवजलधिगतानन्तजन्तुप्रयाणं,
वन्द्यं वन्दे मुनीना सकलगुणनिधिं तीर्थमाद्यं श्रुतं तत् ॥३॥
इन्द्राद्या देवलोके सुरगणसहिता ज्योतिषश्चन्द्रताराः,
पाताले ये च सन्ति चमरबलयुता व्यन्तराश्चाष्टभेदाः ।

देवा देव्यः समस्ता जिनवचनरता नित्यदत्तावधानाः,
शान्ति कुर्वन्तु सङ्घे प्रतिदिनमसकृत् दुःषमायां समायाम् ॥४॥

(२)

(स्रग्धरा)

द्वीपे जम्बाह्वये ये जितमदनबलाः केवलालोकभाजो,
द्वीपे ये च द्वितीये सुखमयविषये पुष्कराद्धे तथा ये ।
भावार्हन्तो जयेयुः समवसरणगा धर्मरत्नं दिशन्त—
स्तेभ्यो भूयादजस्रं त्रिकरणविहितो मामकीनः प्रणामः ॥१॥

पाताले श्रीविशाले भवनपतिसुधान्धोनिवासान्तराले,
तिर्यग् द्वीपेषु ताराग्रह[1]वनगिरिषु व्यन्तराणां पुरेषु ।
ऊर्ध्वं वैमानिकानां निरुपमगृहगाः स्थापनार्हत्समूहाः,
विद्यन्तेऽनेकधा ये त्रिभुवनतिलकास्तान्नमस्कुर्महेऽत्र ॥२॥

कृत्स्नं यत्रास्ति वस्तु प्रणिगदितमिदं द्रव्यपर्यायरूपं,
ज्ञानं स्वान्यप्रकाशि प्रदलितसकला[2]ऽऽदीनवं च प्रमाणम् ।
कर्ता भोक्ता प्रमाता चतसृषु गतिभूत्पत्तिमांश्चिवस्वरूपं,
श्रीसिद्धान्तं नितान्तं जिनपतिगदितं तं भजामः स्मरामः ॥३॥

देवश्रीवर्द्धमानक्रमकमलयुगाराधनेकाग्रचित्ता,
या देवी दिव्यरूपा करतलविलसच्चक्रचापा विपापा ।
श्रीसर्वज्ञप्रणीतं सुकृतमनुपमं कुर्वतां प्राणभाजां ।
विघ्नव्यूहं समन्ताद्दलयतु नितरामाशु सिद्धायिका सा ॥४॥

---

१ ताराग्रहपदेन सकलज्योतिष्कोपलक्षणम् ॥ २ दोषाः ॥

(रचयिता आ. श्री वीरसेनसूरिजी म.)

## छायापूरीभूषण श्रीविमलपार्श्वनाथ स्तुतिः

छाणीमणि श्री-विमलाख्य पार्श्वः, जीयाद् जगत्यां जयदः स सार्वः ।
क्षेमंकरो यस्य सुनाम–मंत्रः, दानेऽस्ति शांतेः स्तुतिरूप–तंत्रः ॥१॥
वैराग्यभावेन सदा प्रशांतं, नैर्मल्य–शैत्येन शशांक कांतम् ।
कामादि वृत्ते र्दमनेन दान्तं, सद्भावतो नौमिः जिनं नितान्तम् ॥२॥
शंकादि–शीततापगमनाय चीरं, अज्ञानमालिन्य हरे ही नीरम् ।
नाशाय मोहाम्बुभृतां समीरं, वन्दे सुशास्त्राम्बुनिधिं गभीरम् ॥३॥
पद्मावती पुष्कल–विघ्नहंत्री, पार्श्वस्य भक्ता सुखशांतिकर्त्री ।
आभूषणै र्भूषित-चारु-गात्री, दद्यात्समाधि कुशलप्रदात्री ॥४॥

## छाणीमंडन श्रीशांतिनाथजिन स्तुतिः

छायापुरीनगरमंडन शांतिनाथः, सेन्द्रैः सुरै र्मुनिगणैः कृतकीर्तिगाथः ।
विश्वेश्वरः परमयारमया सनाथः, आलंबनं भवजले पततां जनानाम् ॥१॥
उन्मत्तमन्मथ-मतङ्गजनाशसिंहैः, रागादि-पादप-निवारण-वारणौघैः ।
सार्वैःसहत्र्यधिकविंशति–तीर्थकृद्भिः,
स्तोष्ये किलाहमपि तं प्रथमंजिनेन्द्रम् ॥२॥
सर्वज्ञ देवमुखसागरतः प्रसूत-मासाद्य तं गणधरैः कृत सूत्रमालाम् ।
अर्थादिरत्ननिकरं किल भाविकौघा–
दन्यः क इच्छति जनः सहसाग्रहीतुम्? ॥३॥
श्रीशांतिनाथः चरणाम्बुज भक्तिभाजां, निर्वाण्यपूर्वबलतः प्रकरोति रक्षाम्।
गातुं मृगांक! सुगुणांस्तव कः समर्थः,
को वा तरीतुमलमंबुनिधिं भुजाभ्याम् ॥ ४ ॥

માલવપ્રદેશના તારક તીર્થોમાં ભગવંતોની ભવ્યતા.. દીવ્યતા..મુગ્ધકારી..મંજુલ દર્શન કરતાં...સ્પર્શન કરતા...વિ. સં. ૨૦૪૪માં પૂ. કર્ણાટકકેશરી ભક્તકવિ આચાર્યદેવશ્રી ભદ્રંકરસૂરીશ્વરજી મહારાજના અંતરની ભક્તિ ભીની ભોમકામાંથી ગીર્વાણ ગિરામાં પ્રવાહિત થયેલી સ્તુતિ-સૂક્તિઓનો સ્વાદ માનીયે આત્માને પાવન કરીએ-ભક્તિના સંગમાં... પ્રીતિના રંગમાં....

### श्री श्रावस्ती तीर्थमंडन संभवनाथप्रभु स्तुतिः

श्रावस्ति पूश्च्युतिजनुर्व्रत केवलाप्तं,
सेनाजितारि जननी जनकात्मजातम् ।
श्रावस्ति तीर्थ मुकुटं त्रिजगद् वरेण्यम्,
वन्देऽथ संभव विभुं जगतां शरण्यम् ।। वसंत. ।।

### मक्षीमंडन पार्श्वनाथ स्तुतिः

मक्षी सुतीर्थवर–मंडन–पार्श्वनाथम्,
आनंदकंद–मतिशेषरमासनाथम् ।
चिन्तामणि भुवनभूषण लोकनाथम्,
नित्यं नमामि मम मानससत्यनाथम् ।। वसंत. ।।

### उज्जैनमंडन अवन्तिपार्श्वनाथ स्तुतिः

अवन्ति यत्पादकजानि लोकम्, स्तुवन्ति सन्निर्जरकाः स्तवैर्यम् ।
भवन्ति भक्त्या तव नाथ सिद्धा, वन्दे प्रवन्द्यंत मवन्तिपार्श्वम् ।।उप.।।

### हासामपुरामंडन अलौकिक पार्श्वनाथ स्तुतिः

श्री हासामपुरे सुमंडनवरम् पद्मावती पूजितम्,
पार्श्वं श्रीदमलौकिकाभिधमिमम् लोकोत्तरर्ध्युर्जितम् ।

तत्रैषा त्रिपुटी गदौषधपुटी विद्युद्गुणानां गुटी,
पूज्या पूजनभेदकैः प्रतिदिनं रक्ष्या च नात्र त्रुटिः ॥शा

आदीश्वरं जिनवरं प्रथमानकीर्ति,
कल्याण कारणमनन्तक शक्ति मूर्तिम् ।
वन्दे तथा चरमतीर्थपति महान्तं,
विश्वेश्वरं परम शान्तिनितान्तकान्तम् ॥ वसंत.

## दर्भावतीमंडन श्री पार्श्वनाथस्तुतिः

श्रीमल्लोढणपार्श्वनाथ वरदं कल्याणकोटीकरं,
जापेनाऽखिल पापतापशमदं कारुण्यपुण्याऽऽकरम् ।
सन्न्यस्ते कमठे शठे समहठे ज्ञानक्रिया कर्मठे,
कुर्वन्तं करुणां दयार्द्रमनसं वन्दे सदा सर्वथा ॥
पार्श्वेशः प्रकटप्रभावी भगवान् भास्वत्प्रभाभास्वरः,
गर्भागार गतोऽपि संस्तृतिजुषां यो गर्भवासापहः ।
सौन्दर्याऽतिशयेन चन्द्ररुचिरश्चञ्चच्चमत्कारकृद्,
सैवाऽयं विदधातु विश्व विदितः श्रेयो नृणां शाश्वतम् ॥शा

## भोपावरमंडन श्री शान्तिनाथ स्तुतिः

भोपावराख्य–वर तीर्थ किरीटरूपं,
श्री शांतिनाथ–जिनपं वर–शान्तिभूपं ।
शांति–स्वभाव शमकारक–सत्प्रभावं,
वन्दे सुभव्यजन–तारणनव्यनावं ॥ वसंत. ॥ १ ॥

चञ्चच्चमत् कृतिकरी बहुपुण्यदृश्या,
शान्तिप्रभो जयति दृष्टजगद्रहस्या ॥ वसंत, ॥ २ ॥

श्री शांतिनाथभगवन् ! भवतान्नमस्ते,
तुभ्यं नमोऽभयदा षोडशतीर्थनाथ ! ।
तुभ्यं नमः प्रकरुणेश ! कपोतरक्ष !,
भोपावराभरण शान्तिविभो नमस्ते ॥ वसंत ॥ ३ ॥

शान्तिः शान्तिकरो महान्जनगणे शान्ति स्तुवे सर्वथा,
रोगो गर्भगशान्तिना प्रशमितः शान्त्यै स्पृहा कस्य ना ।
शान्तेः शान्तरसः परः प्रचलितः शान्तेः प्रभावोऽद्भुतः,
शान्तौ व्यापकशान्तिदान महिमा शान्ते ! भवन्तं भजे ॥
॥ शार्दूल. ॥ ४ ॥

कल्याणालीं सपदि सुसृजन् सर्वभव्यादि वर्गे,
संप्राप्तेऽस्मिन् जिनपतिकृते मंगले मोक्षमार्गे ।
श्री शान्तीशः शमरससरो ग्राम भोपावरस्थः,
शान्तिं देयात् स्वगुणरमणः सत्स्वरूपासनस्थः ॥
॥ मन्दाक्रान्ता ॥ ५ ॥

## श्री नागेश्वरपार्श्वनाथ स्तुत्यष्टकं

(उपजाति)

नमामि नागेश्वर–तीर्थनाथं, श्री वीतरागेश्वर–पार्श्वनाथम् ।
कारुण्यपुण्यं त्रिजगद्वरेण्यं, गुणैरनन्यं भविनां शरण्यम् ॥१॥
छद्मस्थकाले प्रतिमास्थपार्श्वे, दिव्यैर्मनो–मोहक–नीलरत्नैः ।
मूर्ति महास्फूर्ति मयी विधाय, नागेन्द्र आनन्दिमना ननाम ॥२॥

फणाभिपाच्छत्रगणोऽत्र भाति, कायो हरिद् वर्णमयश्चकास्ति ।
ऊध्द्र्वं स्थितोऽपि प्रभुभक्त पुंसां, हृद्रूपसिंहासनशालिपार्श्वैः ॥३॥

नमोऽस्तु नागेश्वर–पार्श्वदेव !, नमोऽस्तु नागेश्वर–मण्डनाय ।
नमोऽस्तु चिन्तामणये जनानां, नमोऽस्तु कल्पाय विकल्पदाय॥४॥

बिम्बस्य पादाऽग्रगतौ तु भक्त्या, द्वौ चामरौ चामरधारिणौ स्तः॥
तेजस्वि–संभास्वररूप–बिम्बे, ज्वलत्प्रदीपप्रतिबिम्बमास्ते ॥५॥

तीर्थोद्धार–करैः पूर्वं, धर्मसागर वाचकैः ।
अभयसागरैः पश्चाद्, नागेश-तीर्थमुध्धृतम् ॥ ६ ॥ अनु. ॥

वाचकगणिनौ सिंहौ, श्री धर्माऽभय सागरौ ।
आचन्द्राऽर्कं जयन्तौ स्तः, तीर्थोद्धारौ सुमालवे ॥ ७ ॥ अनु. ॥

पर्श्वः पातु सुपावनः प्रपतितान् पार्श्वं प्रवन्दे प्रगे,
पार्श्वेनैव कृपा–प्रपा प्रचलिता, पार्श्वाय दत्तं मनः ।
पार्श्वाज्जागृतमेव सज्जगदिदं, पार्श्वस्य नामाऽद्भुतम्,
पार्श्वेऽनन्त-चतुष्टयी सुनियता, नागेशपार्श्वाऽवमाम् ॥८॥शार्दूल.

लब्धिभुवनतिलकाख्या-चार्यशार्दूल सुशिष्यभुजिष्येण ।
भद्रङ्कराचार्येण, कृतं नागेशाष्टकं जयतु ॥ ९ ॥ आर्या.

वेदवेदखाक्षिमिते, वैक्रमे वत्सरे प्रवर्त्तमाने ।
मालवीय नागेशं, नत्वा कृतकृत्या अभवाम ॥१०॥

सफलं जन्म संजातं, मानुष्यं प्राप्य पुण्यतः ।
श्री नागेश्वरतीर्थस्य, यात्रां कृत्वाऽद्य भक्तितः ॥११॥ अनु.